2. रसायनविज्ञानम् (Chemistry), 3. प्राणिविज्ञानम् (Zoology), 4. वनस्पतिविज्ञानम् (Botany), 5. भूगर्भविज्ञानम् (Geology), 6. खगोल-विज्ञानम् (Astronomy) तथा 7. अन्तरिक्षविज्ञानम् (Aeronautics or space science) चेति।

अस्मिन् शोधनिबन्धे रसायन-विज्ञानस्य विश्लेषणं प्रस्तूयते। रसायनविज्ञानस्य रसशास्त्रं, रसविद्या, रसवादश्चेति नामान्तराणि भवन्ति। रसायन-विकासस्यैतिह्यं वस्तुतः सभ्यतायाः विकासस्यैतिहासो वर्तते। रसायन-विज्ञानक्षेत्रे आर्याणां महद् योगदानमस्ति। प्राचीनायां भारतीय-सभ्यतायां धातु-कर्म-वर्णादीनां ज्ञानं प्राचीनं इति भारतीयाः वैज्ञानिकाः समीचीनतया जानन्ति स्म। ऋग्वेदे सोमरसस्य उल्लेखोऽस्ति। वेदेषु रसायनविज्ञान- सम्बद्धानि कानिचन महत्त्वपूर्णानि सूत्राणि प्राप्यन्ते। सर्वेषु वेदेषु जलस्य महत्त्वम्, जलस्य गुणाः, जलस्य भेदाः, जलस्य सृष्टिः, विविधाः धातवः, तन्मिश्रणम्, लवणजलरत्नानाञ्च औषधिरूपेण प्रयोगः सम्यक्तया प्राप्यते। अथर्ववेदस्य कथनं वर्तते यज्जलेऽग्निः (Oxygen), सोमः (Hydrogen) चेति उभे तत्त्वे स्तः। ऋग्वेदे वर्णनं प्राप्यते-**यज्जले वैश्वानारोऽग्निर्वर्तते अग्नीषोमौ बिभ्रति आप इत् ताः।**[1]

इत्थमेव गोपथब्राह्मणे, जैमिनीयोपनिषद्ब्राह्मणे, छान्दोग्योपनिषदि च धातूनां योजनाय विधिरपि प्रदत्तोऽस्ति- **लवणेन सुवर्णं सन्दध्यात् सुवर्णेन रजतं रजतेन लोहं लोहेन सीसं सीसेन...।**[2]

**लवणेन सुवर्णं सन्दध्यात्, सुवर्णेन रजतं, रजतेन त्रपु, त्रपुणा सीसम्, सीसेन लोहम्, लोहेन दारु, दारुणा चर्म।**[3]

दिल्लीप्रदेशस्य लौहस्तम्भः धातुसम्बन्धिनो ज्ञानस्य सर्वोत्कृष्टं प्रमाणमस्ति। महर्षिः कणादो डाल्टनस्य परमाणुवादात् सहस्रवर्षेभ्यः पूर्वमेव प्रतिपादितवान् यत् पदार्थाः अतीव सूक्ष्मकणैः निर्मिताः सन्ति।

रसशास्त्रं नाम देहधातुवादात्मकोभयहेतुकं स्वतन्त्रं शास्त्रं विद्यते। अर्थात् रसशास्त्रस्य मुख्यतया द्विविधमुद्देश्यं भवति-देहवेधः लोहवेधश्चेति। वेधनं नाम देहलोहयोः संस्कारविशेषो वर्तते। वस्तुतः देहलोहयोः अष्टादश संस्काराः सम्भवन्ति-स्वेदनं, मर्दनं, मूर्छा, उत्थानं, पातनं, रोधनं, नियामं, दीपनम्, अनुवासनम्, चारणं, जारणं, गर्भद्रुतिः, बाह्यद्रुतिः, रञ्जनम्, सारणम्, अनुसारणम्, प्रतिसारणम्, वेधनञ्चेति। तथा चोक्तम् आनन्दकन्दे-

**अथादौ स्वेदनं कर्म द्वितीयं मर्दनं प्रिये।**
**मूर्छा तृतीयमुत्थानं चतुर्थं पातनं शिवे।**
**पञ्चमं रोधनं षष्ठं नियामं सप्तमं स्मृतम्।।**

**दीपनं चाष्टमं देवि नवमं चानुवासनम्।**
**दशमं चारणं देवि जारणं रुद्रसंख्याकम्।।**

**गर्भदृतीर्द्वादशी स्यात् बाह्यद्रुतिस्त्रयोदशी।**
**चतुर्दशं स्याद्रागाख्यं सारणा दशपञ्चमी।।**

**अनुसारणा षोडशी विख्याता प्रतिसारणा।**
**सप्तदशी चाष्टदशं वेधनं देहलोहयोः।।**[4]

रससंस्काराय नैकेषां यन्त्राणामावश्यकता भवति। तद् यथा - दोलायन्त्रम्, तीर्यक्पातनयन्त्रं, नाडिकायन्त्रम्, कोष्ठीयन्त्रम्, गर्भयन्त्रम्, अधःपातनयन्त्रम्, जारणयन्त्रञ्च। दोलायन्त्रं द्रव्याणां स्वेदनार्थमुपयुज्यते-

**द्रवद्रव्येण भाण्डस्य पूरितार्धोदरस्य च।**
**मुखस्योभयतः द्वारद्वयं कृत्वा प्रयत्नतः।।**

तयोस्तु निक्षिपेद् दण्डं तन्मध्ये स्वेद्यपोरलीम्।
प्रलम्ब्य सूत्रयोगेन स्वेदयेच्च यथाविधि।।
दोलायन्त्रम् इदं ख्यातं मुनिभिः सूत्रवेदिभिः।।[5]

तीर्यक्पातनयन्त्रं तीर्यक्पातनविधौ रसग्रहणार्थमुपयुज्यते -

क्षिपेद्रसं घटे दीर्घे नताधोनालसंयुते।
तन्नालं निक्षिपेदन्यघटकुक्ष्यन्तरे खलु।।

तत्र रुद्ध्वा मृदा सम्यग्वदने घटयोरधः।
अधस्ताद्रसकुम्भस्य ज्वालयेत् तीव्रपावकम्।।

इतरस्मिन् घटे तोयं प्रक्षिपेत् स्वादुशीतलम्।
तीर्यक्पातनमेतद्धि वार्तिकैरभिधीयते।।[6]

नाडिकायन्त्रम् परिष्कृताम्बुनिर्माणे उपयुज्यते -

घटे तु चुल्लिकासंस्थे निक्षिपेत् सलिलादिकम्।
अधोमुखं घटं त्वन्यं मुखे तस्य निधापयेत्।।

उभयोर्मुखमालिप्य मृदा संशोषयेत्ततः।
उपरिस्थे ततो भाण्डे नाडिकां तु निवेशयेत्।।

एतां तु नाडिकां प्राज्ञो यत्नतः कुण्डलीकृताम्।
जलद्रोण्यां विनिक्षिप्य भित्त्वा चाथ निवेशयेत्।।

काचकूपीमुखे सम्यग् वह्निं प्रज्वालयेत्ततः।
यावद् घटस्थितद्रव्यसारो यातीह वाष्पताम्।।

एतद्धि नाडिकायन्त्रं भिषग्भिः परिकीर्तितम्।
परिस्रुताम्बुनिर्माणे विशेषेण प्रयुज्यते।।[7]

एवमेव कोष्ठीयन्त्रं धातुसत्त्वनिपातार्थम् उपयुज्यते -

षोडशाङ्गुलविस्तीर्णा हस्तमात्रायता शुभा।
धातुसत्त्वनिपातार्थं कोष्ठिका परिकीर्तिता।।
वंशखादिरमाधुकवदरीदारुसम्भवैः।
परिपूर्ण दृढाङ्गारैरधोवातेन कोष्ठके।
भस्त्रया चान्तरमार्गेण ज्वालयेच्च हुताशनम्।।[8]

जारणयन्त्रञ्च गन्धकग्रासने उपयुज्यते -

लोहमूषाद्वयं कृत्वा द्वादशाङ्गुलमानतः।
ईषच्छिद्रान्वितामेकां तत्र गन्धकसंयुताम्।।

मूषायां रसयुक्तायामन्यस्यां तां प्रवेशयेत्।
तोयं स्यात् सूतकस्याध ऊर्ध्वाधो वह्निदीपनम्।।

रसोनकरसं तत्र यत्नतो वस्त्रगालितम्।
दापयेत् प्रचुरं यत्नादाप्लाव्य रसगन्धकौ।।

स्थालिकायां विधायोर्ध्वं स्थालीमन्यां दृढां कुरु।
सन्धिं विलेपयेद् यत्नात् मृदा वस्त्रेण चैव हि।।

स्थाल्यन्तरे कपोताख्यं पुटं कर्षाग्निना सदा।
यन्त्रस्याधः करीषाग्निं दद्यात्तीव्राग्निमेव वा।
एवं तु त्रिदिनं कुर्यात् ततो यन्त्रं विमोचयेत्।[9]

रसस्य गन्धकभक्षणं ग्रासनमिति कथ्यते। रसजलनिधौ चतुर्थाध्याये तस्य निरूपणमेवमुपलभ्यते -

तुल्ये तु गन्धके जीर्णे शुद्धाच्छतगुणो रसः।
द्विगुणे गन्धके जीर्णे सर्वकुष्ठहरः परः।।

त्रिगुणे गन्धके जीर्णे सर्वजिह्वाविनाशनः।
तत्र चतुर्गुणे जीर्णे वलीपलितनाशनः।।

गन्धे पञ्चगुणे जीर्णे नित्यं क्षयहरो भवेत्।
षड्गुणे गन्धके जीर्णे सर्वरोगहरो रसः।।[10]

रसरत्नसमुच्चये पारदपिष्टिकायाः भस्मीकरणविषये उल्लेखः प्राप्यते। पारद-पिष्टिका गर्भयन्त्रेण भस्मीक्रियते-

गर्भयन्त्रं विव्रीयते पिष्टिका भस्मकारकम्।
चतुरङ्गुलदीर्घान्तु यङ्गुलोन्मितविस्तराम्।।

मृण्मयीं सुदृढां मूषां वर्तुलं कारयेन्मुखम्।
लोहस्य विंशतिर्भागा भाग एकस्तु गुग्गलोः।।

सुश्लक्ष्णं पेषयित्वा तु वारं वारं प्रयत्नतः।
मूषालेपं दृढं कृत्वा लवणार्धमृदम्बुभिः।।

कर्षेत् तुषाग्निना भूमौ स्वेदयेन्मृदुमानवित्।
अहोरात्रं त्रिरात्रं वा रसेन्द्रो भस्मतां व्रजेत्।।[11]

सुश्रुत-चरक-बाणभट्ट-वृन्द-चक्रपाणि-प्रभृतीनां ग्रन्थकाराणां ग्रन्थेभ्यः तस्य कालस्य रसायनस्योच्चकोटेः ज्ञानं प्रकटीभवति। एतेषु ग्रन्थेषु मरकरी-सिल्वर- गोल्ड-कापर-जिंक-लेड-टिन-प्रभृतीनां धातूनां यौगिक-निर्माणस्य विस्तृतं विवेचनं समुपलब्धमस्ति। बौद्ध-रसायनज्ञस्य नागार्जुनस्य नाम रसायनविज्ञानक्षेत्रे विशेषेण उल्लेखनीयमस्ति यदेतस्य कालः अष्टमी-नवमी वा शताब्दी आसीत्। विदर्भस्य ब्रह्मवेशीयो नागार्जुनो बाल्यकाले एव मगधस्थिते बालेन्द्रविहारे बौद्धधर्मस्य दीक्षां गृहीत्वा बौद्धोऽभवत्। नालन्दायां पतितस्य कस्यचिद् दुर्भिक्षस्य सन्दर्भे कस्माच्चित् तपस्विनो नागार्जुनो रसायनविद्यां प्राप्तवान्। तत्रैवासौ सामान्येभ्यो धातुभ्यः स्वर्णनिर्माणं कथं क्रियते जनैरित्यपि ज्ञातवान्। तत्पश्चादयं नालन्दायाः मुख्योऽधिष्ठाता बभूव। ख्यातिश्चैतस्य देश-विदेशयोः प्रसृता अभवत्। वैज्ञानिको नागार्जुनो रसरत्नाकर-रसेन्द्रमङ्गलप्रभृति-वैज्ञानिकग्रन्थान् विरचितवान्। रसरत्नाकरः संवादरूपेण विलिखितो वर्तते। अयं संवादश्च रत्नघोष-वटयक्षिणी-शालिवाहन-भाण्डस्यानां नागार्जुनेन सह भवति। नागार्जुनस्य पारदसम्बन्धि अन्वेषणमेकं श्रेष्ठमन्वेषणमस्ति। नागार्जुनविलिखिते रसरत्नाकरे एकमुदाहरणं द्रष्टव्यमस्ति-

किमत्र चित्रं यदि पीतगन्धकः
पलासनिर्यासरसेन शोधितः।
आरण्यकैरुत्पलकैस्तु पाचितः
करोति तारं त्रिपुटेन काञ्चनम्।।[12]

जनेन केनचित् पीतो गन्धकः पलास-निर्यासरसेन शोधित्वा आरण्यकैः उत्पलकैः तत्पच्यताम्। एतदनन्तरं तत्प्रयोगेण रजतेन सुवर्णं निर्मातुं शक्यते। रत्नानां द्रवीकरण-विधिरपि रस-रत्नाकरे विद्यते। धातूनां वेधविधिरपि तत्रैव वर्णितोऽस्ति-

तालेन वङ्ग-दरदेन तीक्ष्णं
नागेन हैमं शिलया च नागम्।
गन्धाश्मना चैव निहन्ति शुल्वं
तारं च मालीकरतेन हन्यात्।।[13]

द्वादश्यां शताब्द्यां भूटानदेशस्य समीपे किरातप्रदेशे 'रसहृदयम्' इति ग्रन्थस्य रचनाऽभवत्। एतस्मिन् ग्रन्थे पारदस्य रञ्जनविधिः शुद्धीकरणविधिरपि प्रदत्तोऽस्ति। एतस्यां शताब्द्यां रसार्णवनामा एको ग्रन्थः समुपलभ्यते। यत्र रसायन-सम्बन्धिनो नैके विषयः प्रतिपादिताः सन्ति। सोमवेदकृतायां रसेन्द्रचूडामणिरिति रचनायां नैके रसायन-प्रयोगाः वर्णिताः सन्ति। एतदतिरिक्ता रसरत्नसमुच्चयः, रसेन्द्रसारसंग्रहः, रसेन्द्रचिन्तामणिः, रसजलनिधिः, रसोपनिषच्चेति ग्रन्थाः रसायन-सम्बन्धिनः सन्ति। भारतीय-रसग्रन्थेषु, पारदः, अभ्रकादिमहारसाः, उपरसाः, धातवः, कनकरजतादीनि, लोहानि तथा एतेषां गुण-लक्षणादीनि, तदुपलब्धिस्थानानि, प्रयोगशाला, तन्निर्माणम्, शुद्धीकरणविधिः, सत्त्वपातनम्, द्रवीकरणम्, भस्मीकरणम्, रसौषधिनिर्माणम् तत्सेवनविधिः, लोहवेधद्वारा सुवर्णनिर्माणं चेति नैके वैज्ञानिका अंशाः चर्चिताः सन्ति।

भारतीय-रसायनग्रन्थेषु रसविवेचनं विशेषेण लभ्यते। रसः सर्वधातून् द्रवीकरोति इत्यतः जरा-रोग- मृत्यु-निवारणार्थं वा उपयुज्यते इत्यतश्चास्य 'रसः' इति नाम प्रयुक्तम्। रसस्य परिभाषा रसरत्नसमुच्चये इत्थं प्राप्यते-

रसनात् सर्वधातूनां रस इत्यभिधीयते।
जरारुङ्मृत्युनाशाय रस्यते वा रसो मतः।।[14]

एतस्मिन् शास्त्रे रसस्यैव प्राधान्यादस्य शास्त्रस्य नाम रसशास्त्रमिति प्रसिद्धमभवत्। एतस्मिन् ग्रन्थे पारदस्य रसः, रसेन्द्रः, सूतः, पारदः, मिश्रकश्चेति पञ्च भेदाः स्वीकृताः सन्ति-

रसो रसेन्द्रः सूतश्च पारदो मिश्रकस्तथा।
इति पञ्चविधो जातः क्षेत्रभेदेन शम्भुजः।।[15]

रसजलनिधिरित्यस्मिन् ग्रन्थे पारदस्य वर्णाः अपि संकेतिताः सन्ति। ते च वर्णाः चत्वारः भवन्ति-

क्षेत्रभेदेन विज्ञेयं शिववीर्यं चतुर्विधम्।
श्वेतं रक्तं तथा पीतं कृष्णं तत्तु भवेत् क्रमात्।।[16]

पारदस्य प्रयोगः कस्मिन् कार्ये क्रियते इत्यपि तत्रैव निर्दिष्टमस्ति -

श्वेतं शस्तं रुजां नाशे रक्तं किल रसायने।
धातुवादे तु तत्पीतं खेगतौ कृष्णमेव च।।[17]

रसजलनिधिः रसायनशास्त्र-विषये महत्त्वपूर्णो ग्रन्थोऽस्ति इत्यत्र न कश्चन सन्देहलेशो वर्तते। एतस्मिन् ग्रन्थे

सर्वे महारसाः उपरसाश्च वर्णिताः सन्ति। अनेकेषां रसानां धातूनां चोत्पत्तिविषयेऽपि ग्रन्थेऽस्मिन् वर्णनमस्ति-

**हेमाद्याः सूर्यसन्तप्ताः स्रवन्ति गिरिधातवः।**
**जत्वाभं मृदुमत्स्नाभं यन्मलतच्छिलाजतु।।**

धातूनां द्रवीकरणविधिः रसरत्नसमुच्चये स्पष्टतया निरूपितोऽस्ति। एतस्मिन् ग्रन्थे वज्रद्रावणोपायः इत्थं निरूपितोऽस्ति-

**वज्रवल्यन्तरस्थं च कृत्वा वज्रं निरोधयेत्।**
**आम्लभाण्डगतं स्वेद्यं सप्ताहात् द्रवतां व्रजेत्।।**[18]

रसशास्त्रे कृतस्य प्रयोगस्य साधुत्व-परीक्षणाय बहवः उपायाः सन्ति। तत्र हरताल-भस्मपरीक्षा-विधानस्य निरूपणम् एवं प्रकारेण कृतमस्ति-

**तालं मृतं सदा ज्ञेयं वह्निस्थं धूमवर्जितम्।**
**सधूमं न मृतमाहुः वृद्धवैद्या इति स्थितिः।।**

रसरत्नसमुच्चये लौहस्य विभिन्नाः प्रकारा अपि निर्दिष्टाः सन्ति। ग्रन्थेऽस्मिन् सुवर्णनिर्माण- विज्ञानविषयेऽपि चर्चा समुपलभ्यते। तत्रैव लेपवेधः, क्षेपवेधः, कुन्तवेधः, शब्दवेधश्चेत्यादयो वेधाः व्याख्याताः सन्ति। तस्मिन् ग्रन्थे लेपवेधस्य विषये इत्थं वर्णनं प्राप्यते-

**लेपेन कुरुते लोहं स्वर्णं वा रजतं तथा।**
**लेपवेधः स विज्ञेयः पुटमत्र च सौकरम्।।**[19]

अभिलषितार्थचिन्तामणौ, रसजल-निधौ च सुवर्ण-निर्माणस्य नैके उपायाः निर्दिष्टाः वर्तन्ते। रसजल-निधौ यथा-

**शिला चतुष्कं गन्धेशो काचकुप्यां सुवर्णकृत्।**
**कीलालायः कृतो योगः सटिकालवलादिकः।।**[20]

रसशास्त्रेषु रस-चिकित्सा-रसायन-शाला-संस्कारयन्त्रादीनां विषये विवेचनं प्राप्यते। अत्र प्राचीन-भारते सम्भूतानां प्रमुखाणां रसाचार्याणामेकं विवरणं, सहैव तत्कृतयश्च प्रस्तूयन्ते-नागार्जुनः/रसरत्नाकरः, भिक्षुगोविन्दः/रसहृदतन्त्रम्, गोविन्दाचार्यः/रससारः, काकचण्डेश्वरः/काकचण्डेश्वरीमततन्त्रम्, यशोधरः/रसप्रकाश-सुधाकरः, वाग्भटः/रसरत्नसमुच्चयः, ढुण्ढुकनाथः/रसेन्द्र-चिन्तामणिः, गोपालकृष्णभरः (रसेन्द्रसार-सङ्ग्रहः), प्राणनाथः रसप्रदीपः, सोमदेवः/रसेन्द्र-चूडामणिः, रसपद्धतिश्च इत्थमस्माकं सम्पूर्णं संस्कृतवाङ्मयमनेकैः रसशास्त्रैः परिपूर्णमस्ति।

एवम्प्रकारेण प्राचीनमिस्रदेशवासिनः, अरबदेशवासिनः, चीनदेशवासिनः च रसायन-विज्ञान-विषये समीचीनतया जानन्ति स्म। मिस्र-देशवासिनां वर्ण-रञ्जन-सीसनिर्माण-धातु-निष्कर्षणादीनां विषये महती प्रगतिरासीत्।

साम्प्रतमाधुनिक-रसायनविज्ञानविषये किञ्चित् प्रस्तूयते Chemistry (केमिस्ट्री) इति शब्दस्योत्पत्तिः मिस्रदेशस्य Chemi (केमि) इति शब्दादभवत्। प्रारम्भे इदं विज्ञानं Chemiteching (केमिटेकिंग) इति नाम्ना प्रचलितमासीत् यत् कालान्तरे Chemistry इत्यभवत्। षोडशीं शताब्दीं यावत् ज्ञातं प्राचीनं रसायनविज्ञानसम्बन्धि ज्ञानं (Alchemy) सञ्चित्य ऐदम्प्राथम्येन पेरासेल्सस-हेल्माण्ट इत्येतौ वैज्ञानिकौ एतद् विज्ञानं वैज्ञानिकस्वरूपं प्रदातुं प्रयत्तवन्तौ। तदनन्तरं प्रीस्टले-शीले-लेवायसिस-प्रभृतयो वैज्ञानिकाः "कीमियागिरी'' अर्थात् रसायनसम्बन्धि ज्ञानं रसायनविज्ञानमिति संघोषितवन्तः। लेवासिसनामा वैज्ञानिकः आधुनिक-रसायन-विज्ञानस्य जन्मदाता मन्यते। कोल्बे-वोएलर-केकुले-पाश्तूर-प्रभृति-वैज्ञानिकानां

कार्बनिक-रसायन-सन्दर्भे महद् योगदानमस्ति। विंशत्यां शताब्द्यां रसायन-विज्ञानस्य अतीव विकासोऽभवत्। लार्डरदरफोर्ड-नील्सबोर-टामसन-सौडी-मैडम-मेरीक्यूरी-आइन्स्टीन-प्रभृतयो वैज्ञानिकाः रेडियोधर्मिता-समस्थानिक-परमाणुसंरचना-परमाणूर्जादीनां सम्बन्धे उल्लेखनीयैरन्वेषणैः रसायन-विज्ञानाय आधुनिक-स्वरूपं प्रदत्तवन्तः।

रसायन-विज्ञानमेकं प्रायोगिकं विज्ञानमस्ति। एतदन्तर्गते द्रव्यसम्बन्धे प्रायः अधोलिखितमध्ययनं विधीयते-द्रव्यं तदीयं संघटनञ्च, द्रव्यनिर्माणकारकाणां, सूक्ष्मकणानामणूनां, परमाणूनां संरचना, द्रव्यस्य गुणधर्मैः आणविक-संरचनाभिश्च तदीयः सम्बन्धः, ऊष्माणां विभिन्नानामूर्जाणाञ्च द्रव्ये प्रभावः परिवर्तनञ्च, द्रव्ये भविष्यमाणेषु परिवर्तनेषु, शोषिता उत्सर्जिता चोर्जा तत्स्वरूपञ्च, द्रव्येषु परस्परं संयोग-कारणानि तन्नियमाश्च, यौगिकानां संश्लेषणम्, गुणधर्मौ तदुपयोगश्च। इत्थं रसायनं नाम विज्ञानस्य सा शाखा वर्तते यत्र पदार्थानां गुण-संघटन-संरचनादीनां, तत्र भविष्यमाणानां परिवर्तनानाञ्च विषयेऽध्ययनं क्रियते।

वस्तुतः रसायनविज्ञानस्य सम्बन्धः पदार्थानामध्ययनेन वर्तते। रसायनस्य असाधारणं विकासमधिकृत्य रसायनविज्ञानं नैकासु उपशाखासु विभक्तमस्ति। रसायनस्य प्रमुखाः शाखाः अधोलिखिताः सन्ति-अकार्बनिक- रसायनम्, कार्बनिक-रसायनम्, भौतिक-रसायनम्, विश्लेषिक-रसायनम्, औद्योगिक-रसायनम्, जैव-रसायनम् कृषि-रसायनम् तथा पर्यावरण-रसायनञ्च।

एतदतिरिक्ताः काश्चन उपशाखाः वर्तन्ते-भूमि-रसायनम्, खनिज-रसायनम्, खाद्य-रसायनम्, औषधीय-रसायनम्, वैषिक-रसायनम्, अपराध-रसायनम्, अन्तरिक्ष- रसायनम्, युद्ध-रसायनम्, तथा नाभिकीय- रसायनञ्चेति।

आयुर्वेदे रसचिकित्सायाः उल्लेखो दृश्यते। भावमिश्रः स्वग्रन्थे भावप्रकाशे सर्वाङ्गसुन्दररस-चतुर्मुखरस-सूतिकाग्ररस-मृतसञ्जीवनीरसानाञ्च चर्चा द्रष्टुं शक्यते। रसचिकित्सायामुपयुक्ताः केचन महत्त्वपूर्णाः रसाः अधोलिखिताः सन्ति। तद् यथा - कज्जली (Black Sulphide of Mercury), रसकर्पूरम् (Calomel), रससिन्दूरम् (Red sulphide of Mercury), पुटितलोहा (Ferric Onide), मारितताम्रम् (Sulphide of copper) मारितसीसकम् (Onide of led) तथा हरतालभस्म (Arsenite of potash) चेति।

**उपसंहारः** - अस्मिन् सन्दर्भे आधुनिक-वैज्ञानिकैः प्रवर्तितां सरणिमनुसृत्य संस्कृत-वाङ्मये निहितस्य रसायन-विज्ञानस्य परिशीलनम् आवश्यकम्। विषयेऽस्मिन् सामग्रिकं तुलनात्मकञ्चाध्ययनम् इदानीमपि अपेक्ष्यते अत्र तु मया दिङ्मात्रं निर्दिष्टम्।

- **सन्दर्भाः**


1. अथर्ववेदे 3.13.31
2. गोपथब्राह्मणे 14, जैमिनीयोपनिषद्ब्राह्मणे 3.17.3
3. छान्दोग्योपनिषदि 4.17.7
4. आनन्दकन्दः 4.2.6
5. रसरत्नसमुच्चयः 9.3.6
6. रसरत्नसमुच्चयः - 9.47.49
7. रसतरङ्गिणी 4.42.46
8. रसजलनिधिः - अध्यायः - 6
9. रसजलनिधिः - अध्यायः - 6
10. रसजलनिधिः - अध्यायः - 4

11. रसरत्नसमुच्चयः - 9.30.33

12. रसरत्नाकरः 2

13. रसरत्नाकरः 52

14. रसरत्नसमुच्चये 2.77

15. रसरत्नसमुच्चयः 1.68

16. रसजलनिधिः, प्रथमः अध्यायः

17. रसजलनिधिः - तृतीयः अध्यायः

18. रसरत्नसमुच्चयः, 4.72

19. रसरत्न-समुच्चयः 8.90

20. रसजल-निधिः, पञ्चमः अध्यायः

➢ **सहायक-ग्रन्थ-सूची**


➢ भारतीय रसशास्त्र, ले. आचार्य पं. विश्वनाथ द्विवेदी शर्मा, आयुर्वेद मन्दिर, दतिया, झाँसी, वाराणसी, नागपुर (Ocean of Indian Chemistry and Alchemy), compiled in Sanskrit with English Translation by Bhudev Mukherjee)

➢ रसेन्द्र-मङ्गलम्, नागार्जुन, चौखम्बा ओरियण्टालिया, वाराणसी - 221001

➢ रसेन्द्र-पुराणम्, ले. रामप्रसाद वैद्य, गंगा विष्णु श्रीकृष्णदास बेंकटेश्वर, मुम्बई

➢ रसाञ्जलनिधिः (An Indian Chemistry and Alchemy with English Commentary), सं भीमदेव मुखर्जी

➢ रसजलनिधिः (Ocean of Indian Chemistry and Alchemy). Compiled in Sanskrit with English Translation by Bhudev Mukherjee, Vol- I

➢ रसजलनिधिः (Ocean of Indian Chemistry and Alchemy). compiled in Sanskrit with English Translation by Bhudev Mukherjee, Vol- I & 5

➢ रसचन्द्रिका, विश्वेश्वर पण्डित, सं. विष्णुप्रसाद भणडारी, चौखम्बा संस्कृत सीरिज, वाराणसी,

➢ रसकामधेनु-चुडामणिः, (An Indian Medicine), Yondal Rasashala Printing press

➢ रसेन्द्रसारसंग्रहः, गोपालकृष्णभट्टविरचितः (पण्डित रामप्रसादकृतः भाषाटीका- सहितः), लक्ष्मीबेंकटेश्वर, स्टीम प्रेस, कल्याण, मुम्बई, 1951

➢ रसरत्नसमुच्चयः, वाग्भट्टाचार्यः, विद्याविलास प्रेस, चौखम्बा संस्कृत सीरिज आफिस, वाराणसी, 1970

➢ बृहद् रसराज सुन्दर, पं. दत्तराम चौबे, चौखम्बा ओरियण्टालिया, वाराणसी - 221001

➢ रसरत्नाकरः (रसखण्डः), श्रीनित्यसिंह विरचितः, चौखम्बा अमर भारती प्रकाशन, वाराणसी, 221001

- रसशास्त्रम्, अत्रिदेव विद्यालङ्कार, हिन्दी साहित्य सम्मेलन, प्रयाग
- वेदरश्मि - डा. वासुदेव शरण अग्रवाल, पारडी, 1964
- वेदविद्या - डा. वासुदेव शरण अग्रवाल, रामप्रसाद एंड सन्स, आगरा
- वेद व विज्ञान, स्वा. प्रत्यात्मानन्द, विश्वविद्यालय प्रकाशन, वाराणसी
- वेद-विज्ञान, कर्पूरचन्द्र कुलिश, राजस्थान संस्कृत अकादमी, जयपुर, 1987
- वेदों की वैज्ञानिक अवधारणा, शिवनारायण उपाध्याय, शिवनारायण उपाध्याय, कोटा
- वेदों में आयुर्वेद, डा. कपिलदेव द्विवेदी, ज्ञानपुर, 1993
- वेदों में विज्ञान, डा. बलराज शर्मा, दिल्ली, 1991
- वैदिककोश, डा. सूर्यकान्त, बनारस यूनिवर्सिटी, 1963
- वैदिक वाङ्मय में विज्ञान, डा. रामेश्वर दयाल गुप्त, सान्दीपनी वेदविद्याप्रतिष्ठान, उज्जैन, 1997
- वैदिक विज्ञान और भारतीय संस्कृति, गिरिधर शर्मा, पटना, 1972
- वैदिक सम्पदा, वीरसेन वेदाश्रमी, दिल्ली, 1973
- वैज्ञानिक विकास की भारतीय परम्परा, डा. सत्यप्रकाश, पटना, 1954
- संस्कृत-साहित्ये जलविज्ञानम्, डा. नवलता, नाग पब्लिसर्स, 11 ए.यू.ए जवाहर नगर, नई दिल्ली - 07
- Founders of sciences in Ancient India, Dr. Satyaprakash, 1957
- सुश्रुतसंहिता, डल्हणटीका, चौखम्बा प्रकाशन, वाराणसी
- चरकसंहिता, व्याख्याता पं. काशीनाथ शास्त्री, गोरखनाथ चतुर्वेद, चौखम्बा प्रकाशन, वाराणसी
- The essence of Vedas. Dr. K.D.Dvivedi, 1990
- Non conventional sources of Energy in Vedas, M. Ashtikar,1995
- Scientific knowledge in Vedas, P.V.Vartak,1995
- Science and Technology in Vedas, Krishnaji, 1995
- Science in the Vedas, V. N. Shastri, Delhi, 1970
- Weather science in Ancient India, A. S.Ramanathan, Jaipur, 1993
- Bharatiya Bauddhika Sampada (A science research Journal, dedicated to redis covering Ancient Indian Sciences, 24, Yogakshema Layout, Wardha Road, Nagpur - 440015
- भारतस्य विज्ञान-परम्परा (A collection of Articles on Indian Scientific Heritage by various authors) संस्कृतभारती, मातामन्दिर गली, झंडेवालान, नई दिल्ली, 110055
- Science and Scientific Elements in Sanskrit, proceedings of National Seminar, Allahabad University, Allahabad, 2005

- संस्कृत में विज्ञान-परम्परा (A book on Ancient Indian Science by Dr. Vidyadhar Sharma Guleri), संस्कृतभारती, मातामन्दिर गली, झंडेवालान, नई दिल्ली, 110055
- The Physics by N. G. Dongre, संस्कृतभारती, मातामन्दिर गली, झंडेवालान, नई दिल्ली, 110055
- Machines in Sanskrit Literature, by P. P. Holay संस्कृतभारती, मातामन्दिर गली, झंडेवालान, नई दिल्ली, 110055
- An Itroduction to मृग-पक्षीशास्त्र of Hansadev, Maruti Chitampalli, संस्कृतभारती, मातामन्दिर गली, झंडेवालान, नई दिल्ली, 110055
- Dietetics in Sanskrit Literature, Dr. J.Y. Deopujari, संस्कृतभारती, मातामन्दिर गली, झंडेवालान, नई दिल्ली, 110055
- Medicines and Surgery in Ancient India (K-H- Krishnamurty) A Yugayatri Publ- 326, Near 8th Main, III stage, IV Block, Basaveshvar Nagar, Bangalore
- संस्कृत वाङ्मय में विज्ञान का इतिहास, संपा. कमलाकान्त मिश्र, (for class 11&12, NCERT, New Delhi





# समवायवादे मणिग्रन्थविवरणे आलोककाराणां जयदेवाचार्याणां (पक्षधरमिश्राणां) प्रकाशकृतां श्रीरुचिदत्तमिश्राणां च सरणिप्रभेदानां विमर्शः



डा. बालमुरुगः
न्यायविभागाध्यक्षः

**उपोद्घातः** - गुणादेः द्रव्ये तादात्म्यमेव संबन्धः न समवायः इति प्राभाकराः मन्यन्ते। तेषां मतं सयुक्तिकं दूषयित्वा नैयायिकप्रवराः परमपूज्याः श्रीमदगङ्गेशोपाध्यायाः तत्त्वचिन्तामणौ प्रत्यक्षखण्डे समवायं संसाधयामासुः। तत्र श्रीमणिकाराः समवायसाधनानि कतिपयानुमानानि प्राणयन्। तेषु कतममनुमानं युक्ततममिति निर्धारणे अस्ति प्रकाशालोककृतोः महान् मतभेदः। प्रबन्धेऽस्मिन् द्वयोः मते परिशील्य यथाशक्ति यथामति च कस्य पक्षः ज्यायान् इति व्यवस्थापनाय प्रयत्नः विहितोऽस्ति।

**मणिकारोक्तं प्रथमानुमान्**- "गुणक्रियाजातिविशिष्टबुद्धयः विशेषणसंबन्धविषयाः विशिष्टबुद्धित्वात् दण्डीतिबुद्धिवत्" इति। अत्र द्रव्ये गुणादिवैशिष्ट्यावगाहिबुद्धयः नीलो घटः इत्यादयः प्रातिस्विकरूपेण पक्षतयाऽभिप्रेताः वर्तन्ते। एवमत्र व्यभिचारशङ्कायाः परिहारः स्वयमेव मणिकारैः कृतः। यथा "न च व्यभिचारः। अभावादिविशिष्टबुद्धेरपि स्वरूपसंबन्धविषयत्वात्" इति। ततः स्वरूपसंबन्धमादायार्थान्तरशङ्कायाः वारणप्रकारः इत्थं प्रदर्शितः मणिकारैः यत्-"न चैवमत्रापि तेनैवार्थान्तरम्, यतो गुणक्रियाजातिविशिष्टबुद्धीनां पक्षधर्मताबलेन विषयः संबन्धः सिद्ध्यन् लाघवादेक एव सिद्ध्यति। स एवसमवायः ................अक्लृप्तत्वाच्च" इति।

**अयं भावः** - पक्षधर्मताबलेन इत्यस्य लाघवज्ञानसहकृतेनानुमानेन (परामर्शेनेति यावत्) इत्यर्थः। तथा च ईश्वरानुमाने इव अत्रापि परामर्शकाले संबन्धस्यानेकत्वे गौरवं एकत्वे लाघवमिति लाघवज्ञानं जायते। नियततादृशलाघवज्ञानोपकृतपरामर्शेन समवायस्सिद्ध्यतीति।

नैतद्युज्यते। ईश्वरानुमाने स्थितिः अन्यादृशी वर्तते। तथाहि लोके नानाविधकार्यकर्तृत्वमेकस्मिन्नपि कर्तरि संभवतीत्यवधारितं वर्तते। अतः परामर्शकाले कर्तृनानात्वैकत्वयोरूपस्थितौ सत्यां क्षित्यादिकर्तुः (कृतेः वा) एकत्वे लाघवं बहुत्वे गौरवमिति लाघवज्ञानं संभवति सहकारि च भवितुमर्हति। तद्वन्नात्र स्थितिः वर्तते। यतः विशेषणभेदे सति संबन्धः भिद्यते एव। न क्वापि नानाविशेषणानाम् एकः संबन्धः प्रसिद्धः इति संबन्धस्यैकत्वे लाघवं नानात्वे गौरवमिति लाघवज्ञानमेव न संभवति। अतः कथं मणिकारैःइत्थमभिहितमितिशङ्काजायते।

**आलोककृद्विशेषः** - अस्याक्षेपस्य पक्षधरमिश्रैरेव समाधानमभिहितमिति विशेषः। यद्यपि विशेषणभेदेन संबन्ध भेदान्न पूर्वोक्तरीत्या लाघवज्ञानं संभवति तथापि गुणादिवैशिष्ट्यावगाहि तत्तद्बुद्धेः संबन्धत्वाश्रयानेकसंबन्धविषयकत्वे

गौरवं, संबन्धत्वाश्रयैकसंबन्ध (समवाय) विषयकत्वे लाघवमिति ज्ञानं संभवति। अनेकंसबन्धविषयिणी समूहालम्बनबुद्धिरपि प्रसिद्धैव। अनने लाघवज्ञानेनार्थान्तरशङ्कापि निरस्ता भवति। तथाहि गुणगुण्यात्मकस्वरूपेषु संबन्धत्वेनाक्लृप्तेषु संबन्धत्वकल्पने तत्तद्बुद्धेः अनेकसंबन्धविषयकतया गौरवं, समवायस्य संबन्धत्वकल्पने एकसंबन्धविषयकतया लाघवमिति। तस्मादनन्तस्वरूपेषु संबन्धत्वकल्पनापेक्षया एकस्मिन् पदार्थे संबन्धत्वकल्पने महल्लाघवं वर्तते। स एव समवायः भवतीति मणिकाराशयः। प्रकृतप्रसङ्गे मणिकाराभिप्रायावगमने आलोकग्रन्थः एवोपकरोतीति निगमनम्।

**प्रथमानुमानत्यागे बीजप्रदर्शने मतभेदः** - एतदनु मणिकाराः अथवेत्यादिना अनुमानान्तरं प्रादर्शयन्। तत्र निमित्तान्वेषणे द्वयोः मतभेदः वर्तते। आलोककारास्तु एवमाहुः यत् - लाघवज्ञानेन प्रतीतेः विषयविषयीभावः नियमयितुं न शक्यते, किन्तु सामग्र्या एव नियम्यते इति अवश्यमभ्युपगन्तव्यम्। अन्यथा विशिष्टबुद्धेः विशेष्यविशेषणमात्रविषकत्वे लाघवमिति विपरीतलाघवज्ञानबलेन संबन्धाविषयकत्वमेव विशिष्टबुद्धेः स्यात्। अतः लाघवज्ञानन्नादरणीयम्। ततः स्वरूपसंबन्धमादायार्थान्तरशङ्कायाः अपरिहार्यतया साध्यान्तरमाहुः मणिकाराः अथवेत्यादिनेति। अत्र प्रकाशकृतामभिप्रायः अन्यथा वर्तते। तथाहि ''धर्मिकल्पनातो वरं धर्मकल्पना''-इति न्यायेन समवायस्वीकारे समवायरूपातिरिक्तधर्मी कल्पनीयः एवं तत्र संबधत्वमपि कल्पनीयम् इति कल्पनागौरवं, समवायास्वीकारे क्लृप्तस्वरूपेषु संबन्धत्वमात्रकल्पनया लाघवमिति दूषणं जागरूकमिति मत्वा साध्यं परिष्कृत्य प्रयोगान्तरमाहुः अथवेत्यादिनेति।

**मतद्वयविमर्शः** - अत्रेदमवश्यं अवधातव्यं यद्-बाधकाभावविशिष्टलाघवज्ञानमेव प्रमाणस्य सहकारि भवति न लाघवज्ञानसामान्यम्। एवं बाधकाभावविशिष्टमपि लाघवज्ञानं प्रमाणस्य सहकारि एव भवति न स्वतन्त्रं कारणम्। अतः लाघवज्ञानघटितसामग्र्या एव ज्ञानस्य विषयविषयिभावः नियम्यते न लाघवज्ञानेनेति नालोककारोक्तनियमस्य विरोधः। विशिष्टबुद्धेः विशेष्यविशेषणमात्रविषयकत्वे लाघवमिति यत्-प्रतिबन्द्यात्मकं विपरीतं लाघवं प्रदर्शितं पक्षधरमिश्रैः तल्लाघवज्ञानं बाधकाभावविशिष्टमेव न भवति। तत्र विरोधः मणिकारैरेवोक्तः वर्तते। यथा "विशिष्टसाक्षात्कारस्य संबन्धाविषयत्वे तदजन्यत्वे वा गवाश्वादावपि विशिष्टबुद्धिप्रसङ्गात्" इति। तस्माद्विरोधसत्वान्न विपरीतलाघवज्ञानं सहकारि भवति कस्यापि प्रमाणस्य।

एवं प्रथमानुमाने अनुमानस्य सहकारिभूतलाघवज्ञानस्य बाधकं किञ्चिदन्वेष्यम्। आलोककारोक्तं विपरीतलाघवं बाधकं न भवितुमर्हति। किन्तु प्रकाशकारोक्तं समवायस्वीकारे अधिककल्पनागौरवमिति गौरवं (गौरवज्ञानं वा) बाधकं भवितुमर्हति। अतः अथवेत्यादिना साध्यपरिष्कारे प्रकाशकारोक्तबीजमेव युज्यते इति भाति।

**मणिकारोक्तं द्वितीयानुमानम्** - अथवेत्यादिना प्रागुक्तस्थले एवार्थान्तरपरिहाराय मणिकाराः साध्यान्तरं प्राहुः, तदेव द्वितीयानुमानं भवति। "अथवा विशेषणसंबन्धनिमित्तकाः इति साध्यम्" इति। गुणक्रियाजातिविशिष्टबुद्धयः विशेषणसंबन्धनिमित्तकाः विशिष्टबुद्धित्वादिति द्वितीयानुमानं भवति। विशेषणसंबन्धनिमित्तकाः इत्यस्य विशेषणसंबन्ध जन्याः इत्यर्थः। प्रत्यक्षे एव विशेष्यविशेषणयोस्संबन्धः कारणं भवति नानुमित्यादिबुद्धौ इति तत्र बाधः एवं तत्रैव व्यभिचारः स्यादिति पक्षे बुद्धिपदं लौकिकप्रत्यक्षपरमेवात्र विवक्षितमिति प्रकाशादिपर्यालोचनयावगन्तुं शक्यते। एवमपि भ्रमात्मकप्रत्यक्षस्य वास्तवसंबन्धं विनापि जायमानतया तत्र व्यभिचारः इति नाशङ्कनीयम्। "हेतौ तु सत्यत्वं विशेषणमि"ति ग्रन्थेन स्वयं मणिकारैः सः दोषः परिहृतः। तथा च गुणादियथार्थसाक्षात्काराः विशेषणसंबन्धनिमित्तकाः यथार्थविशिष्टलौकिक-प्रत्यक्षत्वाद् दण्डीपुरुषः इति विशिष्टप्रत्यक्षवदिति पर्यवस्यति। अनुगतकारणं विनानुगतकार्यं न जायते। रक्तः घटः, नीलः पटः इत्यादि अनुगतप्रत्यक्षं न विशेष्यविशेषणाभ्यामेव भवितुमर्हति। विषयविधया तयोः प्रत्यक्षे कारणत्वं संभवति चेदपि विशेष्यविशेषणामननुगतत्वात् अनुगतप्रत्यक्षं प्रति अनुगतकारणं किञ्चिदन्यदेवान्वेषणीयमिति प्राप्ते विशेष्यविशेषणयोः संसर्गः अनुगतः एव तत्र (प्रत्यक्षे) निमित्तमिति कल्प्यते। तस्य संसर्गस्य (समवायस्य) एकत्वेनानुगतत्वात्। अत एव गुणादेः गुण्यादौ न स्वरूपं संबन्धः। तथासति गुणगुण्यादिस्वरूपाणामनन्तत्वादननुगतत्वाच्च नानुगतप्रत्यक्षं स्वरूपसंबन्ध निमित्तीकृत्य भवितुर्महति। अतः स्वरूपसंबन्धमादाय नार्थान्तरशङ्का उद्भावयितुं शक्या। तथा च विशिष्टप्रत्यक्षस्यानुगतकार्यस्य

कारणतया समवायः सिद्ध्यतीति मणिकाराशयः।

**द्वितीयानुमानविवरणप्रसङ्गे प्रकाशकृद्भिः विवेचिताः विशेषांशाः** – अथानुगतप्रत्यक्षस्य कारणतया समवायः सिषाधयिषितः श्रीमद्भिः मणिकारैः। परन्तु यद्यननुगतानां गुणादिवैशिष्ट्यावगाहिसर्वविधप्रत्यक्षाणां साधारणं कार्यतावच्छेदकं यत्किञ्चित् प्रसिद्ध्यति तदैव तादृशकार्यतावच्छेदकावच्छिन्नं प्रति कारणतया समवायः साधयितुं शक्यते। तत्किमिति जिज्ञास्यते। न विशिष्टप्रत्यक्षत्वं लौकिकविशिष्टप्रत्यक्षत्वं वा तादृशकार्यतावच्छेदकं, अभावादिप्रत्यक्षसाधारणस्य तस्यातिप्रसक्तत्वेन समवायकार्यतावच्छेदकत्वासंभवात्। नापि गुणादिवैशिष्ट्यवगाहिप्रत्यक्षत्वं तत्, तस्याननुगततया तदवच्छिन्नाननुगतकार्यहेतुतया नैकानुगतसमवायापेक्षा, अननुगतानन्तस्वरूपसंबन्धस्यैव पर्याप्तत्वात्। न च समवायनिष्ठ-सांसर्गिकविषयताकप्रत्यक्षत्वं तथा, घटसमवायि कपालमित्यादि-समवायप्रकारकबुद्धिव्यावृत्तये समवायनिष्ठसांसर्गिक-विषयतेत्युक्तमिति वाच्यम्। ईदृशकार्यस्य ग्रहः नानुमानात्पूर्वं वर्तते इति नेत्थमनुमानं प्रयोक्तुं शक्यते।

सन्दर्भेऽस्मिन् प्रकाशकाराः अभावादिप्रत्यक्षव्यावृत्तं निखिलगुणादि-प्रत्यक्षसमावृत्तं कार्यतावच्छेदकं किञ्चिन्निर्वक्तुं शक्यते न वेति गभीरतया विचार्य तथा निर्वचनमशक्यमिति सयुक्तिकं स्थापयामासुरिति विशेषः। सः रमणीयविचारः संक्षेपतोऽत्र निरूप्यते।

तथाहि संयोगसंबन्धेन द्रव्यवैशिष्ट्यावगाहिप्रत्यक्षाणामिव गुणादिविशिष्टबुद्धीनामपि मिथः साजात्यमन्यबुद्धितो वैलक्षण्यञ्च वर्तते। तच्च वैलक्षण्यमेवन्निरुच्यते यत्-स्फुटतरविवेकप्रकाशरहितसंबन्धिद्वयविषयकविशिष्टप्रत्यक्षत्वमिति। यथा संयुक्तद्रव्ययोः घटभूतलयोः मध्येऽयं आधेयः इदमधिकरणमिति विवेकः (भेदः) स्फुटतया ज्ञातुं शक्यः तथा गुणगुण्यादेः विवेकः न स्फुटं ज्ञातुं शक्यः इति गुणादिवैशिष्ट्यावगाहिप्रत्यक्षं स्फुटतरविवेक प्रकाशरहितसंबन्धिद्वय-गोचरविशिष्टप्रत्यक्षं भवति।

एवञ्च तादुशानुगतप्रत्यक्षत्वावच्छिन्ननिमित्ततया समवायः सिद्ध्यतीत्यपि न विचारसहं वर्तते। यतः गुणगुण्या-देरिवाभावाधिकरणयोरपि भेदः न स्फुटं प्रकाशते। एवं क्वचित्संयुक्तद्रव्ययोरपि विवेकः न स्पष्टः। यथा सुवर्णद्रव्ये पार्थिवांशः अयं, सौवर्णांशः अयमिति विविच्य ज्ञातुं न शक्यते। तस्मात्तादृशप्रत्यक्षत्वमभावादिप्रत्यक्षसाधारणमेवेति नाभिमतसिद्धिः। न च तादृशप्रत्यक्षत्वं गुणादिविशिष्टप्रत्यक्षमात्रे विद्यमाना विशेषजातिरिति वाच्यम्। गुणादिविशिष्टप्रत्यक्षमात्रे इत्येवासङ्गतमित्यधस्तात् स्पष्टम्। प्रत्यक्षत्वव्याप्या जातिरित्यपि न युज्यते, चाक्षुषत्वादिना साङ्कर्यात् नीलो घटः घटवद्भूतलमिति समूहालम्बनप्रत्यक्षेऽव्याप्यवृत्तितया च जातित्वासंभवात्।

अतः अभावादिप्रत्यक्षव्यावृत्तप्रत्यक्षत्वनिर्वचनासंभवात् तत्साधारण्येन यथार्थविशिष्टलौकिकप्रत्यक्षत्वावच्छिन्नं विशेष्यविशेषणयोस्संसर्गः निमित्तं संयुक्तद्रव्यविशिष्टप्रत्यक्षे संयोगः इवेति कार्यकारणभावोऽवधार्यते। ततः गुणादिवैशिष्ट्यावगाहिप्रत्यक्षस्यापि तादृशतया तत्कारणतया सिद्ध्यमानः संबन्धः न स्वरूपं, गुणाद्यनन्ताननुगतस्वरूपेषु कारणत्वकल्पनापेक्षया एकस्मिन् अनुगते कारणत्वकल्पने नितरां लाघवमिति लाघवतर्कसहकारेण विलक्षणसंबन्धः समवायः सिद्ध्यतीति मणिकाराणामाशयः वर्णनीयः।

**तृतीयानुमानम्** – ततः नव्यास्त्वित्यादिना तृतीयमनुमानं प्रोक्तं मणिकारैः तद्यथा-''नव्यास्तु गुणक्रियाजातिविशिष्टबुद्धिः संबन्धिभिन्नविशेषणसंबन्धविषया निर्विषयकभावविशेषणकविशिष्टबुद्धित्वात्, इतरनिरूपणानिरूप्य-विशेषणकविशिष्ट-बुद्धित्वाद्वा।'' इति। सर्वत्र बुद्धिपदेन साक्षात्कारः एव विवक्षितः। नीलो घट इत्यादि प्रत्यक्षं संबन्धिभ्यां (विशेष्यविशेषणाभ्यां) घटनीलरूपाभ्यां भिन्नमेव संबन्धं (समवायं) विषयीकरोति, एवं निर्विषयको यः भावः नीलरूपं तद्विशेषणतयावगाहते। स्वरूपसंबन्धमादायार्थान्तरवारणाय साध्ये संबन्धिभिन्नत्वं विशेषणमुपात्तं वर्तते। न हि हेताविव साध्यघटकविशेषणानामपि तद्विशेषणमर्थवद् भवति। अत्रापि दण्डी पुरूषः इत्यादिविशिष्टप्रत्यक्षं दृष्टान्तः। भूतलं घटाभाववदित्याद्यभावप्रत्यक्षे व्यभिचारवारणाय भावविशेषणेति प्रत्यक्षे विशेषणम्। एवमपि विषयतासंबन्धेन ज्ञानवान् घटः इति

प्रत्यक्षे व्यभिचारः इति निर्विषयकत्वेन भावः विशेषितः वर्तते। तत्प्रत्यक्षे विशेषणीभूतस्य भावस्य ज्ञानस्य सविषयकतया न व्यभिचारः। न च भूतले घटाभावः इत्यभावविशेष्यके घटे ज्ञानमिति ज्ञानविशेष्यकत्वं च प्रत्यक्षयोः व्यभिचारः इति वाच्यम्। निर्विषयकभावमात्रविषयकप्रत्यक्षत्वं हेतुतया विवक्षितम्। यद्यपि वीणायां शब्दः इत्यवच्छेदकतासंबन्धेन (स्वरूपसंबन्धविशेषेण) वीणायां शब्दवैशिष्ट्यावगाहिप्रत्यक्षे व्यभिचारवारणाय प्रत्यक्षपदेन लौकिकप्रत्यक्षमेव विवक्षितमिति वक्तव्यं, तथासति 'ज्ञानवान् घटः' इत्यादिप्रत्यक्षाणां ज्ञानलक्षणाप्रत्यासत्तिजन्यत्वेनालौकिकतया न तत्र व्यभिचारप्रसक्तिरिति निर्विषयकत्वविशेषणं निरर्थकमिति भाति। तथापि यदा आत्मविज्ञानं वर्तते तत्काले जायमाने आत्मा ज्ञातः इति प्रत्यक्षे दोषात् समवायः भासते किन्तु विषयविषयीभावः मात्रं भासते तत्र व्यभिचारवारणाय तदर्थवदिति ज्ञेयम्।

अत्र ज्ञातो घटः इत्यादिप्रत्यक्षाणामपि पक्षतावच्छेदकाक्रान्ततया बाधासिद्ध्योः वारणाय निर्विषयकगुणादि-वैशिष्ट्यावगाहिप्रत्यक्षमेव पक्षतयाभिप्रेतम्। अभावादिप्रत्यक्षे व्यभिचारवारकहेत्वन्तरमपि प्राहुः मणिकारः- "इतरनिरूपणा-निरूप्यविशेषणकबुद्धित्वाद्वेति" अभावज्ञानयोः यथाक्रमं प्रतियोगिविषयनिरूप्यतया (तद्ज्ञानाधीनज्ञानविषयतयेत्यर्थः) तत्प्रत्यक्षव्यावृत्तिः। अत्रापि 'भूतले घटाभावः', 'वीणायां शब्दः' इत्यादिसाक्षात्कारे दोषवारणाय इतरनिरूपणानिरूप्यमात्र-विषयलौकिकविशिष्टप्रत्यक्षत्वं हेतुरिति भावः। उक्तत्रिष्वनुमानेषु मध्ये समवायसाधनाय युक्तमनुमानं किमित्यत्र मतभेदः विलसति प्रकाशालोककृतोः।

**आलोककाराभिप्रायः** - आलोककारास्त्वेवं मन्यन्ते यत्-नव्यास्तु इति 'तु' शब्देन मणिकाराः एतन्मतेऽस्वारस्यं प्राकटयन्। तथाहि नव्याः लाघवज्ञानं अनुमानस्य (परामर्शस्य) सहकारीत्यभ्युपगच्छन्ति वा न वा? आद्ये साध्यघटकसंबन्धि भिन्नेति विशेषणं निरर्थकं, विना च तद्विशेषणं विशेषणसंबन्धविषत्वरूपसाध्यं पूर्वोक्तप्रकारेण (प्रथमानुमानोक्तप्रकारेणेति यावत्।) सिद्ध्यति। यदि लाघवज्ञानं न सहकारि तदा तद्विशेषणोपादानेऽपि नेष्टसिद्धिः। तथाहि उक्तानुमानेन यथा संबन्धिभ्यां भिन्नः विलक्षणः संबन्धः सिद्ध्यति तथैव तद्धेतुना तदतिरिक्तसंबन्धोऽपि साधयितुं शक्यते। अर्थाद् यदीदं निर्विषयकभावमात्रविषयकविशिष्टलौकिकप्रत्यक्षं स्यात् तदा समवायभिन्नसंबन्धविषयकं स्यादिति प्रतिकूलतर्कपराहतं भवति नव्यानुमानमिति न तेन समवायसाधनं संभवति।

तस्माल्लाघवज्ञानं सहकार्येवेत्यवश्यमभ्युपेयम्। मणिकारोक्तानुमानेषु प्रागुक्तलाघवतर्कसहकृतं प्रथमानुमानमेव समर्थं (पर्याप्तं) भवति समवायसाधनायेति विज्ञेयम्। न हि तत्रार्थान्तरशङ्का कार्या। आदौ गुणादिविशिष्टबुद्धौ उक्तानुमानेन विशेषणसंबन्धः विषयः समवायः सिद्ध्यन् अभावबुद्धिसाधारण्येन सिद्ध्यति। न तदा (समवायसिद्धिकाले) स्वरूपसंबन्धः अभावसंबन्धतया क्लृप्तः वर्तते। किन्तु समवायसिद्ध्युत्तरकालं अभावादौ समवायस्य बाधं प्रतिसन्धाय स्वरूपं संसर्गतया कल्प्यते। अतः नार्थान्तरशङ्कावसरः। तस्मात् प्रथमानुमानेन समवायसिद्धिः इति।

**प्रकाशकृदभिप्रायः** - तदेतत् प्रकाशकाराः न सहन्ते। तथाहि अभावस्थले समवायबाधोत्तरमेव स्वरूपसंबन्धः कल्प्यते इत्यत्र किं बीजमिति वाच्यम्। न किञ्चित् तादृशं कारणमुपलभ्यते। तस्मादालोककारैः यदुक्तं तदत्यन्तमसङ्गतम्। "अभावस्थले संयोगमात्रबाधे प्रागपि स्वरूपसंबन्धकल्पनासंभवात् समवायबाधोत्तरमेव तत्कल्पनमित्ययुक्तमेव" इति प्रकाशकृद्दूषणमनुसन्धेयमत्र अतः प्रथमद्वितीयानुमानयोः व्यभिचाराभावेऽपि अर्थान्तरदोषः दुरुद्धरः वर्तते इति समवायः न ताभ्यां साधयितुं शक्यते इति विचार्य नव्यास्त्विति तृतीयमनुमानं प्रोक्तं मणिकारैः।

न च नव्यानुमानं प्रतिकूलतर्कपराहतमिति वाच्यम्। गुणादिविशिष्टबुद्धिः संबन्धिभिन्नविशेषणविषयेत्यनुमानं हेतुः नाप्रयोजकः। (न विपक्षबाधकतर्कशून्यः इत्यर्थः।) परन्तु तत्राप्रयोजकशङ्कापरिहाराय तर्कः स्वयं मणिकारैः प्रदर्शितः वर्तते। यथा- "न चाप्रयोजकम् निरुपाधिसंबन्धशालित्वात्" इति। तेनैव हेतुना तत्र समवायभिन्नसंबन्धविषयकत्वं साधयितुं न शक्यते। तत्र सः हेतुः अप्रयोजकः। (न विपक्षबाधकतर्कयुक्तः) अतः समवायातिरिक्तसंबन्धसाधनासंभवात् न नव्यानुमानं प्रतिकूलतर्कपराहतं, किन्तु तदेव समवायसाधनाय सुयोग्यमनुमानमिति ज्ञातव्यम्।

**मतद्वयविमर्शः** - यद्यपि लाघवज्ञानं प्रमाणस्य सहकारीत्यविवादं तथापि न सर्वविधलाघवज्ञानं तथा भवति किन्तु बाधकाभावविशिष्टमेव तथेत्यधस्तात् विवेचितम्। तत्र दृष्टान्तः - विशिष्टबुद्धेः विशेष्य- विशेषणमात्रविषयकत्वे लाघवमिति लाघवज्ञानं विशिष्टबुद्धेः संबन्धाविषयकत्वे प्रयोजकं भवति वा न वेति विवादे नेति बाधकं प्राहुः मणिकाराः - "विशिष्टसाक्षात्कारस्य संबन्धाविषयत्वे ....... गवाश्वादावपि विशिष्टबुद्धिप्रसङ्गादि"ति। तथा च संसर्गं विना विशिष्टबुद्ध्यङ्गीकारे परस्परसंबन्धशून्ययोः गवाश्वयोरपि विशिष्टबुद्ध्यापत्त्या विशिष्टबुद्धिः संबन्धविषयिण्येव भवतीति पूर्वोक्तलाघवज्ञानं न प्रयोजकं बाधकसत्वादिति।

एवं प्रथमानुमानेन समवायसाधने विशिष्टबुद्धेः संबन्धत्वाश्रयैकसंबन्धविषयकत्वे लाघवमिति लाघवज्ञानमेव सहकारि भवति। अर्थाद् लाघवज्ञानसहकारेणैव समवायः साधनीयः। तल्लाघवज्ञानं प्रयोजकमेव न भवतीति तत्र बाधकं प्रदर्शितवन्तः प्रकाशकाराः। तथाहि ''धर्मिकल्पनातो वरं धर्मकल्पना'' इति न्यायेन क्लृप्तस्वरूपेषु संसर्गत्वमात्रकल्पने लाघवमिति। समवायकल्पने समवायरूपातिरिक्तधर्मी कल्पनीयः, एवं तत्र संबन्धत्वमपि कल्पनीयमिति कल्पना गौरवम्। एवञ्च अतिरिक्तधर्मिकल्पनं न युक्तं, क्लृप्तधर्मेषु संबन्धत्वमात्रकल्पनमेवयुज्यते इति बाधकसत्वात्। बाधकाभावविशिष्ट-लाघवज्ञानस्य प्रयोजकस्य विरहात् प्रथमानुमाने नार्थान्तरशङ्का परिहृतेति न तेन समवायसाधनं संभवति। तत्तुल्यास्थितिः द्वितीयानुमाने वर्तते। तथाहि गुणादिविशिष्टसाक्षात्कारस्य कारणत्वमनन्तस्वरूपेषु कल्पने गौरवं, एकस्मिन् समवाये तत्कल्पने लाघवमिति लाघवज्ञानसहकृतानुमानेन (परामर्शेन) खलु समवायः सिषाधयिषितः। तत्रेदं बाधकं यत्- गुणादिप्रत्यक्षं यद्यनुगतं स्यात्तदा अनुगतकारणापेक्षा तदेव न। गुणादिविशिष्ट-प्रत्यक्षमननुगतमेवेति सयुक्तिकं व्यवस्थापितं वर्तते प्रकाशकारैः। तस्मादत्रापि गुणादिप्रत्यक्षं प्रति क्लृप्तस्वरूपेषु कारणत्वकल्पने लाघवं, समवाये कारणत्वकल्पने धर्मिधर्मोभयकल्पनाप्रयुक्तगौरवमिति ज्ञानं बाधकं वर्तते। तथा चात्रापि बाधकाभावविशिष्टलाघवज्ञानाभावान्न द्वितीयेनापि समवायः साधयितुं शक्यते।

एवञ्चेत्थं मतद्वयाभिप्रायपरिशीलनोत्तरं इदं निगमनं प्राप्यते यत्-लाघवज्ञानमाश्रित्यैव (बलेनैव) प्रथमद्वितीयानुमानाभ्यां समवायः साधनीयः। तत्र बाधकसत्वाल्लाघवज्ञानं प्रयोजकमेव न भवतीति प्राप्ते, नव्योक्तं तृतीयानुमानमेव समवायसाधने सक्षममिति प्रकाशकृतां पक्षः एव ज्यायान्। अत एव प्रकाशकाराः नव्यानुमानावतरणे एवं प्राहुः- "अत एवापरितोषाद्यत्रार्थान्तर-शङ्का नास्ति तादृशं मतान्तरमवतारयति नव्यास्त्विति" इति।

एवं स्थिते (प्रथमानुमानेऽर्थान्तरशङ्कायाः अपरिहार्यत्वे) प्रथमानुमानेनैव समवायः साधयितुं शक्यते इति आलोककारैः कथमुक्तमिति नावगम्यते। एवं अभावबुद्धिसाधारण्येन आदौ समवायः सिद्ध्यति, तदुत्तरं तद्वारधात् स्वरूपसंबन्धः कल्प्यते। तस्मात् प्रथमानुमाने न स्वरूपमादायार्थान्तरशङ्केति आलोककाराणां वचनमपि न स्वीकर्तुं शक्यते मणिग्रन्थविरोधात्।

तथाहि प्रथमद्वितीयानुमानयोः मणिकाराः अभावस्थले क्लृप्तस्वरूपसंबन्धमादाय स्वयमर्थान्तरशङ्कामुद्भाव्य लाघवयुक्त्यातिरिक्तसंबन्धं (समवायं) साधयितुं प्रयिततवन्तः। अत एव ज्ञायते अभावस्थले समवायात् प्रागेव स्वरूपसंबन्धः क्लृप्तः इति। अन्यथा मणिकाराणां स्वरूपमादायाक्षेपः असङ्गतः स्यात्। तस्मादालोककाराणां ग्रन्थः न विचारसहः इति भाति।

**विशेषः** - अस्मिन् प्रसङ्गे स्वरूपसंबन्धमादायार्थान्तरपरिहाराय प्रतिबन्दिद्वयं प्रकाशकाराः उद्भावितवन्तः। समवायास्वीकारे कारणत्रयव्यवस्था न स्यात्। (समवायिकारणासमवायिकारणनिमित्त-कारणानीति कारणत्रयव्यवस्था इत्यर्थः।) एवं समवायस्थाने स्वरूपसंबन्धेनाश्रयनाशः आश्रयिनाशं प्रति हेतुरिति वक्तव्यम्। तथासति ध्वंसोऽपि नश्येदिति।

अत्र पूर्वपक्षिप्राभाकराः वर्तन्ते। न ते कारणत्रयमङ्गीकुर्वन्ति, न वा समवायिकारणनाशः कार्यनाशहेतुरिति स्वीकुर्वन्ति। अतः प्रतिबन्दिद्वयमपि प्राभाकरमते अनिष्टापादकं न भवतीति ज्ञेयम्। स्पष्टञ्चैतत् न्यायशिखामणौ। (प्रकाशव्याख्याने।)

- **प्रबन्धनिर्माणार्थं परामृष्टाः ग्रन्थाः**

1. तत्त्वचिन्तामणिः – श्रीमद्गङ्गेशोपाध्यायानाम्।
2. प्रकाशः – तत्वचिन्तामणिव्याख्या, श्रीरुचिदत्तमिश्राणाम्।
3. न्यायशिखामणिः – प्रकाशव्याख्या, श्रीरामकृष्णाध्वरीन्द्राणाम्।
4. आलोकः – तत्वचिन्तामणिव्याख्या, श्रीपक्षधरमिश्राणाम्।



# आधुनिकसंस्कृतवाङ्मये बुद्धविजयकाव्यस्य स्थानं प्रासङ्गिकता च

**डा. प्रफुल्लगडपालः**
**साहित्यविभागाध्यक्षः**

**बु**द्धविजयकाव्यम् आधुनिकसंस्कृतसाहित्यस्य अमूल्यो निधिर्वर्तते। संस्कृतसाहित्यस्य बौद्धविद्यायाश्च विशिष्टेन विदुषा सुगतकविरत्नेन आचार्येण शान्तिभिक्षुशास्त्रिणा बुद्धविजयकाव्यं व्यरचि। बुद्धविजयकाव्यस्य प्रकाशनम् आचार्यशान्ति-भिक्षुशास्त्रिणः पत्नी श्रीमती सुजाताशास्त्री राजनिवासात् सोलनतः (हिमाचलप्रदेशात्) १९७४ तमे वर्षे अकारयत्। १९७७ तमे वर्षे ग्रन्थस्यास्य प्रणयनार्थम् आचार्यशान्तिभिक्षुशास्त्री साहित्याकादमी-सम्मानं प्राप्नोत्। ततः १९८८ तमे वर्षे आचार्यशास्त्रिमहोदयः लेह-लद्दाखस्थ-केन्द्रीयबौद्धविद्यासंस्थानात् बौद्धहिमालयग्रन्थ-मालायाः सप्तमप्रसूनत्वेन बुद्धविजयकाव्यं स्वोपज्ञ-हिन्द्यनुवादेन सह प्राकाशयत्।

अस्य महाकाव्यस्य प्रणेतुः सुगतकविरत्नस्य आचार्यशान्तिभिक्षुशास्त्रिणो जन्म २७ दिसम्बर, १९१२ मिते काले उत्तरप्रदेशस्य लखनऊसमीपे बीबीपुरग्रामे सञ्जातम्। अस्य पिता पण्डित-अयोध्याप्रसादत्रिपाठी माता रुक्मिणीदेवी च आस्ताम्। अनेन जयपुरसंस्कृतमहाविद्यालयात् १९३८ तमे वर्षे स्वर्णपदकेन सह साहित्याचार्य-उपाधिः समधिगतः। कालान्तरेण भदन्तबोधानन्दस्य सान्निध्येऽयं बौद्धभिक्षुः जातः। ततोऽयं विश्वभारतीशान्तिनिकेतने अध्यापनमपि अकरोत्। अत्रैव भिक्षुजीवनं परित्यज्य १९५३ तमे वर्षे अयं सुजातया सह विवाहं कृतवान्। १९५६-५९ मिते काले अयं जर्मनीस्थ-कार्लमार्क्सविश्वविद्यालये लाइपछिग् इत्यत्र अध्यापनमकरोत्। १९५९ तमे वर्षे अयं पीएच. डी. उपाधिं प्राप्नोत्। ततोऽयं १९५९-७२ मिते काले श्रीलङ्कास्थ-विद्यालङ्कारविश्वविद्यालये संस्कृतस्य अध्यापनमकरोत्। पुनः भारतमागत्य दिल्लीविश्वविद्यालये मानार्हाचार्यरूपेण कार्यमकरोत्। यथापूर्वमुक्तं १९७७ तमे वर्षे बुद्धविजयकाव्यस्य कृते अयं साहित्याकादमीपुरस्कारेण सम्मानितः। १९७९ तमे वर्षे श्रीलङ्कास्थ-केलानियाविश्वविद्यालयेन डी. लिट्. उपाधिः अस्मै दत्तः। १५ अक्टूबर, १९९१ दिनाङ्के अस्य कवेः निधनं जातम्। १४ महत्त्वपूर्णा ग्रन्थाः अनेन प्रणीताः, अनूदिताः सम्पादिताश्च।

आधुनिकसंस्कृतसाहित्ये बुद्धविजयकाव्यस्य महनीयग्रन्थस्य महती उपयोगिता माहात्यञ्च वर्तते। ग्रन्थोऽयं न केवलं संस्कृतसाहित्यस्यापितु समस्तसाहित्यप्रपञ्चस्य समादरणीयो ग्रन्थो वर्तते। बुद्धविजय-काव्यस्यास्य प्रमुखतो भागद्वयं पूर्वार्द्धम् उत्तरार्द्धञ्च वर्तते। अस्य महाकाव्यस्य निबन्धनम् अत्यन्तं सुनियोजितं वर्तते। अयं ग्रन्थः १९ पर्वसु विभक्तो वर्तते, यस्मिन् खलु १०० सर्गाः वर्तन्ते। पूर्वार्द्धभागे आरम्भिकसप्तपर्वसु ५० सर्गाः उत्तरार्द्धे च भागे द्वादशपर्वसु पुनः ५० सर्गाः निबद्धाः वर्तन्ते। इत्येवं प्रकारेण बुद्धविजयकाव्ये आहत्य १०० सर्गाः सुगुम्फिताः सुनियोजिताश्च वर्तन्ते। अस्मिन् महाकाव्ये आहत्य ५,१०० श्लोकाः सन्तीति-कृत्वा अस्य अपरं नाम 'पञ्चसाहस्रीसंहिता' इत्यपि वर्तते। अत्यन्तं प्राञ्जलया, हृदयग्राहिण्या सुबोधया च भाषया ग्रथितेऽस्मिन् महाकाव्ये भगवतो बुद्धस्य जीवनस्य, चरितस्य दर्शनस्य च सुष्ठु वर्णनं लभ्यते। सम्भाव्यते यत् ललितविस्तरमुपजीव्य ग्रन्थोऽयं विरचितो जातः इति। अस्मिन् महाकाव्ये सिद्धार्थगौतमबुद्धस्य जन्म, महाभिनिष्क्रमणं,

बुद्धत्वप्राप्तिः, धर्मचक्रप्रवर्तनं, महापरिनिर्वाणा-दिघटनानां मनोहारिचित्रणम् उपलभ्यते। भगवतो बुद्धस्य पूर्वजन्मनां कथाः अपि अत्र प्रसङ्गवशाद् उपलभ्यन्ते। बुद्धकालीनेतिहासस्य सामाजिक-आर्थिक-धार्मिक-राजनैतिकस्थितीनां च अस्मिन् महाकाव्ये सुष्ठु निरूपणं दृश्यते। तत्रापि भगवतो बुद्धस्य शिक्षाः देशनाश्च अत्र विशेषतया विलसन्ति।

अतः आधुनिकसंस्कृतसाहित्ये ग्रन्थोऽयं महत्त्वपूर्णं स्थानं भजते। अस्मिन् ग्रन्थे भगवतो बुद्धस्य शिक्षाः स्थविरवादपरश्चपरानुसारेण लक्ष्यन्ते, ताः शिक्षाः अत्यन्तं लोकोपयोगिन्यः सन्ति। पुनः साम्प्रतिककाले विश्वे अनेकप्रकारकाः समस्या समाजे दृश्यन्ते। नैतिकचरित्रदृशा समाजस्य अधःपतनं जायमानं वर्तते। एतादृशपरिस्थितौ अस्य ग्रन्थस्य माध्यमेन प्रस्तुताः भगवतो बुद्धस्य ताः शिक्षा अत्यन्तं महत्त्वं भजन्ते, सर्वेषां कल्याणाय कल्पयन्ति चेति।

संस्कृतसाहित्ये ग्रन्थादौ ग्रन्थमध्ये ग्रन्थान्ते च मङ्गलाचरणपरम्परा दृश्यते। अत्र प्रथमपर्वणः समग्रोऽपि प्रथमसर्गः मङ्गलाचरणायैव कल्पितोऽस्ति। प्रथमपर्वणि बुद्धवन्दनानाम्नि प्रथमे सर्गे भगवतो बुद्धस्य वन्दना कृता कविना।[1] अस्मिन् सर्गे पूर्वजातानां बुद्धानामपि स्तुतिः कृता वर्तते। तत्र च भविष्यमाणानां बुद्धानामपि स्तुतिः वर्तते।[2] अत्र बुद्ध-दीपङ्कर-मङ्गल-सुमन-रैवत-शोभित-अनवमदर्शि-पद्मोत्तर-नारद-सुमेध-सुजान-प्रियदर्शि-अर्थदर्शि-धर्मदर्शि-सिद्धार्थ-तिष्य-पुष्य-विपश्यि-शिखि-विश्वभू-ककुप्छन्द-कोणागमन-कश्यप-इत्येतेषां चतुर्विंशतिः बुद्धानां स्तुतिः कृता वर्तते। भिन्न-भिन्न-देशेषु त्रिपिटकानां संरक्षणपरश्चपरायाः वर्णनं कृत्वा सिद्धार्थगौतमबुद्धं सश्चबोध्य तस्य विस्तरेण स्तुतिमकरोत्कविः। ततो भगवतो बुद्धस्य अहिंसापालनस्य शिक्षायाः प्रासङ्गिकता अत्र उपस्थापिता। तद्यथा-

**अस्मिन् कलियुगे क्रूरे हिंसयोन्मत्तदुर्जने।**
**पाठयन्तमहिंसाया पाठं तं नौमि गौतमम्।।**[3]

**श्रीबुद्धविजयकाव्यस्य प्रासङ्गिकता-**

आचार्यशान्तिभिक्षुशास्त्रिप्रणीतं बुद्धविजयकाव्यम् उपदेशैः शिक्षाभिश्च संवलितं किञ्चित् सुन्दरं महाकाव्यं वर्तते। महाकाव्येऽस्मिन् भगवतो बुद्धस्य बौद्धधर्मस्य चोपदेशानां विशालराशिः उपलभ्यते। बौद्धशास्त्रेषु यथोक्तं खलु ''यत् बुद्धभाषितं सर्वं तत्सुभाषितम्'' इति। तदनुसारेण जगति यत्किमपि बुद्धभाषितं वर्तते तत्सर्वं सुभाषितमेव। अनेन प्रकारेण बुद्धविजयकाव्ये बुद्धभाषितानां सुभाषितानां महान् राशिः उपलभ्यते। वस्तुतो महाकाव्यस्यास्य प्रत्येकं सर्गः सदुपदेशैः शिक्षाभिश्च परिपूर्णोऽस्ति। अत्र पर्वशः बुद्धशिक्षा उपस्थापयितुं प्रयासो विधीयते।

तत्र प्रसङ्गानुसारं प्राच्यबौद्धधर्मग्रन्थानुसारेण कविः बुद्धप्रवचनानि सम्यक्तया अत्र न्यरूपयत्। प्रथमपर्वणः बुद्धवन्दनाभिधाने प्रथमे सर्गे भगवन्तं बुद्धं प्रति श्रद्धान्वितः कविस्तं 'सुभाषितसागर' इति अभिज्ञया व्यभूषयति। तद्यथा -

**सुभाषितानां गंभीरं सागरं प्रणमाम्यहम्।**
**स्यन्दते यत्र यत्किंचित् सुभाषितनदीनदम्।।**[4]

'बुद्धस्य सुशिक्षाभिः जगत् सुखी भवति' इति बुद्धशिक्षाणां प्रासङ्गिकतां कविः इत्थं प्रस्तौति-

**स्पृहयामि कृपापारावाराय बृहदात्मने।**
**यत्कृपाबिन्दुमासाद्य जगतीयं सुखायते।।**[5]

भगवतो बुद्धस्य शिक्षाः आदिमध्यान्तकल्याणकारिण्यः वर्तन्ते, ताभिः मनुष्यमात्रस्य कल्याणं भवेदिति कामना कविः इत्थं प्राकटयत् -

**आदिमध्यान्तकल्याणो धर्मो गगनसंनिभः।**
**आश्रयः सर्वसत्त्वानां यस्य सोऽस्तु ममाश्रयः।।**[6]

बौद्धताभिवन्दनानाम्नि द्वितीये सर्गे कविः भगवतो बुद्धस्य स्तुतिं कुर्वन् सदाचरणशीलान् बौद्धान् नमस्करोति।[७] भगवतो बुद्धस्य विचारैः प्रभाविताः बुद्धानुयायिनः बोधिसत्त्वाश्च अत्र सम्पूजिताः अभवन्। ''अहिंसा परमो धर्मः'' इति बौद्धधर्मस्य मूलस्वरूपं वर्तते इतिकृत्वा अहिंसायाः अहिंसकानाञ्च प्रशंसा विशेषतः अत्राभूत्। अयं विचारोऽनेन श्लोकमाध्यमेन दृढतया स्पष्टीभवति-

**धर्मं हि शरणं गत्वा ते शान्तिं शरणं गताः।**
**अहिंसा परमा शान्तिः शान्तं धर्मं नमाम्यहम्।।**[८]

अहिंसा, चौर्यकर्म, कामुकता, असत्यवाक्, मद्यपानविरक्तिः चेत्येते दुर्गुणाः निन्दिताः एवञ्च एतेषां दुर्गुणैः विरक्तानां स्तुतिः अत्र कविः अकरोत्। बुद्ध-धर्म-सङ्घान् शरणं गच्छन् कविः एतेषां माहात्म्यं विवर्णयति। वस्तुतः बुद्धस्य गुणाः ज्ञानम्, अहिंसा एकता च बौद्धतापदेन सम्बोधिताः समभवनत्र। तान् गुणान् एव कविः वन्दते।

कल्याणमित्रं स्तुवन् कविः आत्मानं शुद्धसत्त्वत्वेन प्रतिष्ठापयितुम् उत्तमभावनां हृदि प्रकटयति। द्वितीये बोधिव्रतकथाभिधाने पर्वणि सुमेधबोधिसत्त्व एव गौतमबुद्धत्वेन जन्म ग्रहिष्यतीति कथयित्वा दीपङ्करो बोधिसत्त्वः भविष्यद्वचः कथयति। तत्र कविः बोधिव्रतपालनरतस्य बोधिसत्त्वस्य सद्गुणान् कथयति। तद्यथा-

**दानं ददाति लोकाय बोधिव्रतपरायणः।**
**परार्थबन्धनोऽबद्धो विधातुं दुःखिनां सुखम्।।**[९]

अत्र बोधिव्रतस्य वर्णनं लभ्यते। अग्रिमसर्गे उन्मादन्ती-जातकस्य कथा वर्तते। तत्र च उन्मादन्त्याः रूपसौन्दर्ये मोहितस्य नृपस्य चित्ते यदा सद्बुद्धेः विकासो जायते, तदा सः सेनापतिम् अहिपारकम् एतैः शब्दैः स्वसद्विचारान् कथयति-

**आत्मानमप्रभुः पातुं चेद् दौःशील्यादहं वद।**
**शीलेन योजयिष्येऽत्र पालयिष्ये कथं प्रजाः।।**[१०]

अत्र मानवकर्तव्यविषये अत्यन्तं गरिमापूर्णम् उपदेशं सः श्रावयति।[११] पुनः अन्यत्र गुरोः आज्ञामपालयन् शिष्यरूपो बोधिसत्त्वः शीलस्य अचौर्यस्य च उपदेशान् कथयति।[१२]

तृतीयपर्वणः आरभ्य षष्ठपर्व यावत् भगवतो बुद्धस्य मानवीयजीवनस्य सुचारुवर्णनं विद्यते। अत्र प्रसङ्गानुसारं सच्छिक्षायुताः उपदेशाः अपि वर्तन्ते। ततोऽग्रे बोधिप्राप्त्यनन्तरं कानिचन दिनानि बुद्धत्वस्य आनन्दम् आस्वादयन् तथागतो बुद्धः काशीस्थ-ऋषिपतनस्य मृगदावोपवने पञ्चवर्गीयान् भिक्षून् सदुपदेशैः कृतार्थीकरोति। सः मध्यममार्गस्योपदेशम् इत्येवं प्रकारेण करोति-

**भिक्षवो धर्मचर्यायां रतिचित्तेन साधुना।**
**प्रव्रजितेन संसेव्यौ न द्वावन्तौ कदाचन।।**

**यो हि कामसुखारामो न सेव्योऽन्तः स आदिमः।**
**रमन्ते बहवस्तस्मिन् न स धर्म्यो विधिर्मम।।**[१३]

ततः बुद्धः द्वितीयम् अन्तमित्थम् उपदिशति-

**यः खल्वात्मक्लमाभ्यासो निराहारादिभिः कृतः।**
**अपरोऽन्तः स विज्ञेयो न सेव्यः सोऽपि कर्हिचित्।।**[१४]

इयं मध्यमा प्रतिपत् दुःखमुक्तेः निर्वाणप्राप्तेश्च महत् साधनमिति कविना अत्र इत्थं प्रस्तुतम्-

**उभावन्तौ परित्यज्य मध्यमा प्रतिपन्मम।**
**शान्तिबोधिमुखेनेयं दुःखनिर्वाणकारिणी।।**[१५]

अत्र सः मध्यममार्गस्यास्य गहनं विवेचनं प्रस्तौति।[१६] आर्यसत्यानां विवरणं कथयित्वा भगवान् बुद्धः एतं सिद्धान्तं तेषां कृते बुद्धिसुलभं विदधाति। तद्यथा-

**दुःखं सर्वस्य लोकेऽस्मिन्नार्यसत्यं हि तन्मम।**
**न कोऽपि विवदत्यत्र विविक्तं न सुखं यतः।।**[१७]

अग्रे सः आर्यसत्यानां विशदतया वर्णनं करोति।[१८] अनन्तरं सः यक्षानां जिज्ञासां शान्तयन् तान् धर्मोपदेशं करोति।[१९]

षडहापदानाभिधाने सर्गे बुद्धः पञ्चस्कन्धान् दिशति। खिन्नमनः यशोदं भगवान् तथागतो बुद्धः सत्प्रवचनैः एवं सन्दिशति-

**दरिद्रो विद्यते कोऽपि धनवानत्र कश्चन।**
**दरिद्रदुःखहर्ता हि धनाढ्य किल शोभते।।**[२०]

भगवतो बुद्धस्य उपदेशोऽयं साम्प्रतिके काले समधिकः उपयोगी वर्तते। समाजे विद्यमानाम् आर्थिकीं विषमतां शमयितुमिदं वचः मन्त्रवद् वर्तते। बौद्ध-अर्थशास्त्रेऽस्य महत्स्थानं वर्तते। बौद्ध-अर्थशास्त्रं (Buddhist Economics) साम्प्रतिके काले खलु सम्माननीयः वैश्विको विषयः वर्तते। अनेन सिद्धान्तेन समाजे व्याप्ता आर्थिकी विषमता नाशयितुं शक्यते, या खलु समाजशास्त्रिणां कृते सर्वदा चिन्तायाः विषयो भवति।

त्रिकल्याणधर्मनिर्देशः कल्याणचित्तवर्धनः इत्येतयोः सर्गयोः भगवतो बुद्धस्य कल्याणभावना कथिता वर्तते। या खलु मानवीयजीवनस्य आदर्शरूपेण प्रतिष्ठां प्राप्नोति। इत्येवं सप्तमपर्वणि बुद्धोपदेशाः सुष्ठुरीत्या वर्णिता वर्तन्ते। अष्टमपर्वणि भद्रवर्गीय-काश्यपबन्धु-बिम्बिसार-महाकाश्यप-मौद्गल्यायन-कात्यायनादीनां दीक्षावसरेषु भगवांस्तान् उपदेशान् कथयति।

भगवतो बुद्धस्य स्वीयकल्याणयुतोपदेशानां विषये इत्थं स्वभावनां प्रकटयति-

**आदिकल्याण उक्तो यो मध्ये कल्याण एव यः।**
**पर्यवसानकल्याणो यो वो धर्मो मयोत्तमः।।**
**चरन्तश्चारिकां सर्वे लोकानुग्रहकांक्षया।**
**अद्वया उपदेष्टुं तं कृतकृत्या अपीत भोः।।**[२१]

अस्मिन् पर्वणि वर्णिताः उपदेशाः मानवीयजीवनस्य कृते मङ्गलकारिणः, उत्तमपदप्रापाराः सदाचरणयुताश्च वर्तन्ते। भद्रवर्गीयान् पापविरतिपूर्णोपदेशान् कथयन् भगवांस्तान् सदाचरणयुतकर्मसु प्रवर्तयितुं उपदिशति। तद्यथा-

**पापानि ये न कुर्वन्ति मनोवाक्कायचेष्टितैः।**
**त एव लोकान् रक्षन्ति करुणामतयो जनाः।।**
**येन पीडात्र सत्त्वानां यच्च निन्दन्ति सज्जनान्।**
**सर्वं तत्पापकं कर्म करणीयं न कर्हिचित्।।**[२२]

भगवतो बुद्धस्य उपदेशेषु दर्शनसम्बद्धं प्रवचनमत्र प्रस्तूयते-

**धर्मा ये हेतुप्रभवास्तेषां यो हेतुरुद्भवे।**
**हेतुस्तथा निरोधे यस्तमत्राह तथागतः।।**[२३]

कपिलवास्तु इति नवमे पर्वणि राजकुल-नन्द-राहुलादीनां दीक्षावसरेषु भगवान् उत्तमवचैः तान् उपकरोति। दशमपर्व पूर्णतः भगवतो बुद्धस्य प्रवचनैः संवलितं वर्तते। अत्र उपालि-अनाथपिण्डद-बिम्बिसार-कोसलराजादीनां कृते दीक्षावसरे

बुद्धः स्ववचोभिस्तान् उत्तमकर्माणि उपदिशति। अस्मिन्नैव पर्वणि त्रिरत्नमहिमा सत्यावववादश्चेति सर्गद्वयं बुद्धस्य उत्तमप्रवचनकारणात् विशिष्टं स्थानं भजते।

आनन्दपर्वणि आनन्द-विशाखा-अङ्गुलिमाल-जीवक-सुभद्रादीनां कृतेऽपि भगवान् तेषां दीक्षावसरेषु सदुपदेशान् अकथयत्। अङ्गुलिमालाय बुद्धभाषितोपदेशास्तावदत्र प्रस्तूयन्ते-

**नित्यं स्थितोऽस्मि तं प्राह क्राम्यन्नेव तथागतः।**
**भ्राम्यन् भ्राम्यन् परिश्रान्तस्तिष्ठ त्वमपि साम्प्रतम्।।**[९]

इत्येवमस्मिन् बुद्धविजयकाव्ये प्रसङ्गानुसारेण बुद्धोपदेशराशिः प्रचुरतया उपलभ्यते। वस्तुतः महाकाव्येऽस्मिन् प्रस्तुताः भगवतो बुद्धस्य शिक्षा साम्प्रतिककालेऽतीव महत्त्वं भजन्ते। साम्प्रतं समाजे नैकविधाः समस्याः कुरीतयश्च सन्ति। तासां समस्यानां समाधानं भगवतो बुद्धस्य शिक्षाभिः कर्तुं शक्यते। भगवतो बुद्धस्य शिक्षाः समाजस्य कल्याणाय कल्पन्ते, यतोहि भगवता बुद्धेन एकं पदमपि व्यर्थं शिक्षाविहीनं वा न उच्चारितम्। तस्य शिक्षाभिः प्राणिनः सुखिनो भवितुमर्हन्ति। अतः आधुनिके संस्कृतसाहित्ये अस्य महाकाव्यस्य महत्स्थानं महती च प्रासङ्गिकता वर्तते इति शम्।

**ये धर्मा हेतुप्रभवा हेतुं तेषां तथागतो ह्यवदत्।**
**तेषां च यो निरोध एवंवादी महाश्रमणः।।**

➤ **सन्दर्भग्रन्थाः–**

1. बुद्धविजयकाव्यम्, आचार्य शान्तिभिक्षुशास्त्री, केन्द्रीयबौद्ध-विद्यासंस्थानम्, लेह-लद्दाख, १९८८


➤ **सहायकग्रन्थाः–**

2. रूपचन्द्रिका
3. अमरकोशः


➤ **सन्दर्भाः-**

१. बु.वि.का. १.१-२
२. बु.वि.का. १.३
३. बु.वि.का. १.२६
४. बु.वि.का. १.३०
५. बु.वि.का. १.३२
६. बु.वि.का. १.४५
७. बु.वि.का. २.१-१४
८. बु.वि.का. २.१८
९. बु. वि. का. ६.४४

१०. बु. वि. का. ८.२६

११. बु. वि. का. ८.२७-२९

१२. बु. वि. का. ८.४५-४९

१३. बु. वि. का. ४१.२-३

१४. बु. वि. का. ४१.१०

१५. बु. वि. का. ४१.१६

१६. बु. वि. का. ४१.४-१६

१७. बु. वि. का. ४१.१७

१८. बु. वि. का. ४१.१८-५१

१९. बु. वि. का. ४२.२३

२०. बु. वि. का. ४४.१२

२१. बु. वि. का. ५१.४-५

२२. बु. वि. का. ५१.१७-१८

२३. बु. वि. का. ५४.९

२४. बु. वि. का. ८६.३६



# वेदाविर्भावप्रयोजनं वेदसंख्योपपत्तिश्च



**डॉ. शैलेन्द्रप्रसादउनियालः**
**सहायकाचार्यः ( सं. ), वेदविभागः**

**इ**ह हि मानुषजन्मजुषां जनानां सर्वत्र सदैव सुखलाभायाभिलाषा जागर्तितराम्। तच्च सुखं केन लभ्यत इति जिज्ञासायामज्ञातार्थज्ञापको वेदभागो विधिरिति-परिभाषा पुरो विलसति। अथ **इष्टप्राप्त्यनिष्टपरिहारयोरलौकिकोपायं वेदयति यो ग्रन्थः स वेद**[1] इति वचनं मानवसुखाभिलाषपूरणे दृढमुपकरोति। अमुमेवाशयं यास्कोक्तिः परिपुष्णाति यत् -

**पुरुषविद्या नित्यत्वात्कर्मसम्पत्तिर्मत्रो वेदे।**[2]

पुरुषनिष्ठा या विद्या सा पुरुषविद्या। यतो हि पुरुषोऽनित्यः, तस्मात्तन्निष्ठापि विद्या अनित्यैव भवति। तस्मात्पुरुषप्रणीता या विद्या सा अनित्यत्वात्, लोकानामविगुणतया कर्मफलसिद्ध्यर्थं वेदमन्त्रणामाविर्भावो बभूव। तथा हि स्मृतिः -

**यज्ञानां तपसां चैव शुभानां चैव कर्मणाम्।**
**वेद एव द्विजातीनां निःश्रेयसकरः परः।।**[3]

लोकानां सकलकल्याणसाधको भगवान् वेदः सृष्ट्यादौ सर्वार्थव्यञ्जकभावेन प्रादुर्बभूव। तथाहि वचनानि-

**न कश्चिद् वेदकर्ता स्याद् वेदस्मर्ता चतुर्मुखः।**
**वेदो नारायणः साक्षात्स्वयम्भूरिति शुश्रुम।।**[4]

**सर्वेषां तु स नामानि कर्माणि च पृथक् पृथक्।**
**वेदशब्देभ्य एवादौ पृथक्संस्थाश्च निर्ममे।।**[5]

**सर्वेषां तु स नामानि कर्माणि च पृथक् पृथक्।**
**वेदशब्देभ्य एवादौ देवादीनां चकार ह।।**[6]

अरे महतो भूतस्य निःश्वसितोऽयं यद् ऋग्वेदो यजुर्वेदोऽथर्ववेदश्चेति।[7]

**यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत्।**
**निर्ममे तमहं वन्दे विद्यातीर्थं महेश्वरम्।।**[8]

वेदस्य कर्त्तविषये अस्ति विद्वत्सु वैमत्यम्। एकस्तावत् भगवतः श्रीमन्नारायणस्य ईश्वरस्य श्वासप्रश्वासभूतः स्वीकरोति। अपरस्तु यथाकालं ऋषिभिः प्रणीतः इति। तत्राद्यपक्षे सृष्ट्यादौ वेदान् स्मृत्वा ततः ऋषिभ्यः अद्य तेऽपि

स्वशिष्यान् अध्यापयामासुरिति श्रवणपरम्परयाद्यावधि अविकृतो वेदराशिः प्राप्तः। तथा हि भट्टाः -

**वेदाध्ययनं सर्वं गुर्वध्ययनपूर्वकम्।**
**वेदाध्ययनसामान्यावधुनाध्ययनं यथा॥**[9]

अत आब्रह्मणः सकाशाद् गुरुशिष्यपरम्परया प्राप्तो वेदोऽद्यापि वैदिकसम्प्रदाये राराजते। वेदस्य नित्यत्वं साधयन्तिमीमांसकाः कथयन्ति यदीशश्वास-भूतत्वाद् वेदाः नित्याः। अथ नित्यस्य चेयं परिभाषा यत् प्रयत्नानपेक्षत्वं नित्यत्वम्। यस्य सञ्चालनं प्रयत्नं विनैव क्रियते तन्नित्यम्। यतो हि श्वास-प्रश्वासयोः सञ्चालनं प्रयत्नविनैव क्रियते। अन्यथा हि प्रसुप्तावस्थायां जनः मृत एव स्यात्। तथा नास्त्यतः ईशवद् वेदा अपि नित्या एव। अपरस्तु मन्त्रे वर्णितविषयमवलम्ब्य तस्मिन् काले तदनन्तरं वायं मन्त्रः रचितो भवेदिति अनुमानं कुर्वन्ति। इत्थं वेदमन्त्राणामस्तित्वे पक्षद्वयं प्रचलति। तत्र महर्षिः जैमिनिरपि तथ्यमिदमादाय सूत्रयामास।

**वेदांश्चैके सन्निकर्षं पुरुषाख्या।**[10] इति

तथा ह्याप्ता उपदिशन्ति - **प्रतिमन्वन्तरं चैषा श्रुतिरन्या विधीयत**[11] इति। कल्पो हि कल्पपूर्वः।

युगान्तेऽर्हितान् वेदान् सेतिहासान् महर्षयः।

**लेभिरे तपसा पूर्वं ह्यनुज्ञाताः स्वयंभुवा॥**[12]

वेदप्रणिहितो धर्मः ह्यधर्मस्तद् विपर्ययः।

**वेदो नारायणः साक्षात् स्वयम्भूरिति शुश्रुम॥**[13]

एभिः प्रमाणैः सिद्ध्यति यत् - लोकानां सकलमङ्गलविधायको वेदः प्रतिमन्वन्तरं लोकनियामकत्वेन तिष्ठति। स ब्रह्मा यथापूर्वं देवानां गणमसृजत्। प्राणिनामिन्द्रादीनां कर्माणि आत्मा स्वभावो येषां तेषाम् अप्राणिनाञ्च ग्रावादीनां साध्यानां च देवविशेषाणां समूहं यज्ञं च ज्योतिष्टोमादिकं कल्पान्तरेऽप्यनुमीयमानत्वान्नित्यम्। अतः साहित्यिकाः स्मरन्ति यत्-

**इदमन्धंतमः कृत्स्नं जायेत भुवनत्रयम्।**
**यदि शब्दाह्वयं ज्योतिरासंसारं न दीप्यते॥**[14]

**वेदसंख्योपपत्तिः**

सर्वं वेदे प्रतिष्ठितमित्यभियुक्तोक्तेः वेदाः मानवजातेः पथप्रदर्शकाः सर्वविधहितसाधकाश्च सन्ति। अनन्ता वै वेदा[15] इति श्रूयते। तर्हि वेदानां संख्याज्ञानविषये जिज्ञासा स्वतः जायते। वेदाश्चत्वारस्त्रयो वा? उताहो तदुभयभिन्नः इति विचारः प्रवर्तते।

सृष्ट्यादौ समग्रवैदिकवाङ्मयमेकमेवासीत्। पौराणिककथानुसारं शङ्खासुरो नामकः दानवः वेदान् अपहृत्य समुद्रे प्रविवेश। वेदानुद्धर्तुकामः श्रीमन्नारायणः शङ्खासुरं हत्वा तत आनीय ब्रह्मणे ददौ, ब्रह्मा च ततोऽर्धं आदित्ये संस्थापयामास, अवशिष्टभागं च ऋषिभ्योऽध्यापयामास। ते च स्वशिष्यानिति गुरुशिष्यपरम्परयाद्यावधिः वेदराशिः वैदिकेषु राजते।[16]

**जन्मसंस्कारविद्यादेः शक्तेः स्वाध्यायकर्मणोः।**
**ह्रासदर्शनतो-ह्रासः सम्प्रदायस्य मीयताम्॥**[17]

इत्युदयनाचार्यस्य वचनानुरूपं स्पष्टितः क्रमशः जन्मसंस्कारादीनां ह्रासः युगानुसारं प्रवर्तमानं दृश्यते। अतो महर्षिः वेदव्यासः स्वयोगबलेन भाविजनान् मतिमन्दान् प्रपश्यताननुग्रहीतुं समग्रवेदराशिं चतुर्धा व्यभजत्।[18]

परावरज्ञः स ऋषिः कालेनाव्यक्तरंहसा।
युगधर्मव्यतिकरं प्राप्तं भुवि युगे युगे॥

भौतिकानां च भावानां शक्तिह्रासं च तत्कृतम्।
अश्रद्धानात्रिः सत्वात् दुर्मेधान् ह्रसितायुषः॥

दुर्भगांश्च जनान् वीक्ष्य मुनिर्दिव्येन चक्षुषा।
सर्ववर्णाश्रमाणां यद्दध्यौ हितममोघदृक्॥

चातुर्होत्रं कर्मयुक्तं प्रजानां वीक्ष्यवैदिकम्।
व्यदधाद् यज्ञसन्तत्यै वेदमेकं चतुर्विधम्॥

विभज्य च पैलवैशम्पायनजैमिनिसुमन्तुशिष्येभ्यः क्रमादुपदिदेश। ते च स्वशिष्येभ्य इति परम्परया अस्मदादिपर्यन्तं सम्प्राप्तः वेदराशिः।[19]

तेनासौ चतुरो वेदांश्चतुर्भिर्वदनैर्विभुः।
सव्याहृतिकान् सोङ्कारांश्चातुर्होत्रविवक्षया॥

पुत्रानध्यापयत्तांस्तु ब्रह्मर्षीन् ब्रह्मकोविदान्।
ते तु धर्मोपदेष्टारः स्वपुत्रेभ्यः समादिशन्॥

ते परम्परया प्राप्तास्तत्तच्छिष्यैर्धृतव्रतैः।
चतुर्युगेष्वथ व्यस्ता द्वापरादौ महर्षिभिः॥

क्षीणायुषः क्षीणसत्त्वान् दुर्मेधान् वीक्ष्य कालतः।
वेदान् ब्रह्मर्षयो व्यस्यन् हृदिस्थाच्युतचोदिताः॥

अस्मिन्नप्यन्तरे ब्रह्मन् भवाँल्लोकभावनः।
ब्रह्मेशाद्यैर्लोकपालैर्याचितो धर्मगुप्तये॥

पराशरात् सत्यवत्यामंशांशकलया विभुः।
अवतीर्णो महाभाग वेदं चक्रे चतुर्विधम्॥

ऋगथर्वयजुःसाम्नां राशीनुधृत्य वर्गशः।
चतस्रः संहिताश्चक्रे मन्त्रैर्मणिगणा इव॥

तासां च चतुरः शिष्यानुपाहूय महामतिः।
एकैकां संहितां ब्रह्मन्नेकैकस्मै ददौ विभुः॥

पैलाय संहितामाद्यां बह्वृचाख्यानुवाच ह।
वैशम्पायनसंज्ञाय निगदाख्यं यजुर्गणम्॥

साम्नां जैमिनये प्राह तथा छन्दोगसंहिताम्।

श्रुतौ हि श्रूयते-

**तस्माद्यज्ञात्सर्वहुतः ऋचः समानि जज्ञिरे।**
**छन्दाँसि जज्ञिरे तस्माद्यजुस्तस्मादजायत।।**[20]

तथा च स्मृतिः -

**अग्निवायुरविभ्यस्तु त्रयं ब्रह्म सनातनम्।**
**दुदोह यज्ञसिद्ध्यर्थमृग्यजुः सामलक्षणम्।।**[21]

इत्यादि शास्त्रोक्तप्रमाणैः वेदास्त्रय एव सन्तीति सिद्ध्यति। परन्तु चत्वारो वेदा इति पक्षोऽपि लोकवेदयोः सुप्रसिद्ध एव। यथा-

**ऋग्वेदं भगवोऽध्येमि यजुर्वेदं सामवेदमथर्वाणं चतुर्थम्।**[22]

**ऋग्वेदो यजुर्वेदः सामवेदोऽथर्ववेदः।**[23]

**ऋग्यजुः सामाथर्वाणश्चत्वारो वेदाः सशाखाश्चत्वारः पादा भवन्ति।**[24]

तर्हि किमाकारः कोऽयं भेदः कथञ्च कल्पित इति प्रश्नः समुदेति।

पक्षद्वयेषु प्रमाणदर्शनादुभावपि पक्षौ शुद्धौ स्तः। तत्र भेदे यत्कारणं तद्विचारयामः। तत्र त्रयीविद्याविषये हेतवं यथा-

'यत्रार्थवशेन पादव्यवस्था सा ऋक्। गीतीषु **समाख्या शेषे यजुः शब्दः**'[25] इति वेदानां त्रित्वे लक्षणानि व्याजहार जैमिनिः। तथा हि महीधरः - नियताक्षरपादावसाना ऋक्। अनियताक्षरपादावसानो यजुः। ऋच्यध्यूढं सामगीयते इति च ब्राह्मणम्।[26] अनेन प्रकारेण वेदानां त्रित्वे प्रमाणानि व्यवस्थितानि। अथोभयथा सङ्गतिरुच्यते। त्रयो वेदा इति लाक्षणिको भेदः। चत्वारो वेदा इति प्रायोगिको भेदः। लक्षणाधारेण भेदः सुस्पष्ट एव। अत एव वेदत्रयीत्युपदेशः साधुः सङ्गच्छते। चत्वारो वेदा इति यागगतप्रयोगाधारेण विभागः शास्त्रसिद्धः तद्यथा स्वयं श्रुतिः कथयति-

**ऋचान्त्वः पोषमास्ते पुपुष्वान्गायत्रन्त्वो गायति शक्वरीषु।**
**ब्रह्मात्वो वदति जातविद्यां यज्ञस्य मात्रां विमिमीत उत्वः।।**[27]

यज्ञप्रयोगकाले एकः होता ऋत्विक् ऋचां पाठं करोति। एकः उद्गाता ऋचामुपरि सामगानं करोति। ब्रह्मा प्रयोगव्युत्क्रमे हविषः स्कन्ने भिन्ने वा प्रायश्चितरूपां विद्यां वदति। अध्वर्युः स्फ्यमादाय यज्ञस्य प्रयोगं सम्पादयति। एतेनेदं सिद्ध्यति यत् यज्ञप्रयोगसम्पादनाय होता-उद्गाता-ब्रह्माध्वर्यवः स्वस्ववेदगतान् मन्त्रान् पठन्ति। वेदविभागेन कर्मविभागस्तेषां निर्धारित एव। तद्यथा ऋग्वेदाध्यायी हौत्रकर्म करोति। अथवैवं वक्तव्यं भवति, यः होत्रकर्म करोति असौ होता इति कथ्यते। एवं सामवेदाध्यायी उद्गाता कथ्यते। अध्वर्युः कर्मसु-वेदयोगादिति वचनात् यजुर्वेदाध्यायी आध्वर्यवकर्म करोति। अध्वर्युः यजुर्वेदाध्यायी भवति। यद्यपि ब्रह्मा सर्वविद्यो भवति तथापि प्रायश्चित्तादि कथनात् प्रामुख्येनाथर्ववेदाध्यायी भवति। एवं चतुर्धा वेदानां ऋत्विग्विभागेन प्रयोगार्थं विभागः कृतः।

**ऋग्यजुः सामाथर्वाख्याश्चत्वारो वेदनिर्मलाः।**[28]
**ईतिधृतिः शिवा शक्तिश्चतस्रोवेदयोषितः।**

इति सशक्तिकाः चत्वारोवेदाः मनुजानां कल्याणसाधकाः।

**( साङ्केतिकसंख्याविवरणम् )**

1 सायणः, तै. भाष्यभूमिका पृष्ठ 2

2 निरुक्तम् 1/2/7

3 याज्ञव. स्मृति 1/40

4 आह्नि. सू. पृष्ठ 4

5 मनु. 1/21

6 विष्णुपु. 5/62

7 श. ब्रा. 10/2/4/10, मै. उप. 6/32

8 ऋ. भा. भूमिका मङ्गलाचरणम्, श्लो. 2

9 श्लो. वार्तिकम्, 1/1/6

10 जैमिनिसू. 1/1/27

11 का. श्रौ. सू. (विद्याधरगौड) भूमिका, पृष्ठ 10

12 तै. सं. भाष्यभूमिका (सायणभाष्यम्), पृष्ठ 8

13 श्रीमद्भागवत, 6 स्क. 1/40

14 काव्यादर्शः, 3/4

15 तै. ब्रा. 3/10/11/4

16 वेदस्याध्ययनं सर्वं गुर्वध्ययनपूर्वकम्।
वेदाध्ययनसामान्यादधुनाध्ययनं यथा।। श्लो. वा. 1/1/6

17 न्या. कु. 2/3

18 ऋग्यजुः सामाथर्वाख्या वेदाश्चत्वार उद्धृताः।
इतिहासपुराणञ्च पञ्चमो वेद उच्यते।। श्रीभा. 1.4.16

अथर्वाङ्गिरसीं नाम स्वशिष्याय सुमन्तवे।।

पैलः स्वसंहितां स्वां तु पञ्चधा व्यस्य संहिताम्।
वात्स्यमुद्गलशालीयागोखल्यशिशिरेष्वधात् ।।

जातूकर्ण्यश्च तच्छिष्यः सनिरुक्तां स्वसंहिताम्।
बलाकवैजवैतालविरजेभ्यो ददौ मुनिः।।

बाष्कलिः प्रतिशाखाभ्यो बालखिल्याख्यसंहिताम्।
चक्रे बालायनिर्भज्यः कासारश्चैव तां दधुः।।

बह्वृचाः संहिता ह्येता एभिर्ब्रह्मर्षिभिर्धृताः।
श्रुत्वैतच्छन्दसां व्यासं सर्वपापैः प्रमुच्यते।। श्रीमद्भागवत 12/6/44-60

20 शु. यजु. 32/5

21 मनु. 1/23

22 छा. उ. 7/1/12

23 मु. उ. 1/1/5

24 नश. ता. ला. 1/2

25 जै. सू. 2/1/35-37

26 छा. उ. 1/6/1

27 ऋग्वे. 10/71/11

28 आह्निक सूत्रावली



# संस्कृताध्ययनस्य-आवश्यकता



**श्रीओम शर्मा**

**सहायकाचार्यः (सं.), व्याकरणविभागः**

**प्र**स्तुतेऽस्मिन् शोधपत्रे निरूपितं यत् संस्कृतं सृष्टितोऽद्यापि प्राणदायिनी वर्त्तते। सा अमृता भाषा, न मृता भाषा। अस्याः प्रयोगक्षेत्रं बहुविस्तृतं दृश्यते यतोहि षोडशख्रीष्टाब्दपूर्वं संस्कृतभाषा जन-जनमुखे आसीत्, तस्या ह्रासः कथं जातः? कथं संस्कृतसदृशी वैज्ञानिकीभाषा ह्रासतां गता। तथा संस्कृत भाषायाः श्रैष्ठ्यं कीदृशमस्ति इत्यादिवर्णनं शोध पत्रादौ कृतम्।

समाजस्य कृते कस्मिन्-कस्मिन् क्षेत्रे संस्कृतज्ञानस्य नितान्तावश्यकता वर्त्तते तथा च संस्कृताज्ञानात् अद्यतन समाजः कथं प्रतीयते, यथा-कामधेनुं परित्यज्य अजा दोहने आबद्धपरिकरको दृश्यते। संस्कृताज्ञानवशात् कथं समाजस्था संस्कृति विलुप्ता दृश्यते, संस्कृतमयोऽयं समाजः पुरा कीदृशः समृद्धः आसीत् इत्यादिकं सर्वविधवर्णनां मध्ये कृत्वाऽन्ते सर्वविधानुभूतावश्यकतानां समाजस्य विविधपक्षानां सोद्देश्यकं वर्णनं कृत्वा संस्कृतेनैव तेषां समाधानं कृत्वा संस्कृतभाषायाः पाणिनिव्याकरणस्य वैज्ञानिकत्वं प्रदर्शयन् पाणिनिव्याकरणस्य सर्वातिशायित्वं संसूचितम्। अथ च संस्कृताध्ययनस्यावश्यकता विषये नैकविदुषां मतप्रदर्शनं कृत्वा विविधप्रकारेण समसामयिकरीत्या संस्कृतविषयमुपसंहृतम्।

**विषयप्रवेशः**

भारतस्य प्रतिष्ठे द्वे संस्कृतं संस्कृतिस्तथा इत्युक्त्या भारतस्य प्रतिष्ठातत्वं संस्कृतन्नाम दैवीवाक्य। संस्कृतमस्यां भुवि अनादिकालतः सततरूपेण ज्ञानगङ्गां प्रवाहयति। अस्या भाषाया अनादित्वं प्राचीनत्वञ्च निर्विवादं यतोहि मानवसभ्यतायाः प्राचीनतमः अनादिवेदः संस्कृतभाषायामेव वरीवर्तते। वेदः अनादिः प्राचीनतम इति सर्वे स्वीकुर्वन्ति। वेदस्य अनादित्वे संस्कृतभाषायाः अनादित्वं सुतरां सिद्ध्यति। तथा चोक्तम्-

अनादिनिधना नित्या वागुत्सृष्टा स्वयंभुवा ।<br>
आदौ वेदमयी दिव्या यतः सर्वा प्रवृत्तयः ।।

नामरूपं च भूतानां कर्मणाञ्च प्रवर्त्तनम् ।<br>
वेदशब्देभ्य एवादौ निर्ममे स महेश्वरः ।।[1]

संस्कृतम् अमरा भाषा वर्त्तते यतोहि सा सृष्टेः प्रारम्भात् अद्यावधियावत् सहस्रशः भाषारूपी पुत्रीः अजीजनत्यपि तासामपेक्षया युवतितमा वर्त्तते। मन्येऽहं सर्वेऽपि भारतीयानामीश्वरविषयकप्रत्यक्षं नाकारि तथापि ईश्वरीयामृतभाषायाः साक्षात्कारन्तु तेषां पुरत एव वर्त्तते। अस्या अमरभाषायाः संसेवनात् मरणधर्माणः वाल्मिकिकालिदास-पाणिनिपतञ्जलिप्रभृतयः कोटिशः विद्वांसः अमृतयशस्काः संबभूवुः।

लक्षशः मानवाः संसारस्य तात्विकज्ञानाभावात् सांसारिकवस्तुषु मोहकरणात् तन्नष्टे सर्वस्वं नष्टमिति स्वीकारात् अर्धविक्षिप्तितावशाद् पेरिसदेशस्य 'एफिलटावर' इति स्थानात् वान्यसंसाधनात् स्वदेहं त्यजन्ति। किन्तु ये संस्कृतेषु निबद्धं वेदान्तादिशास्त्राणि पठन्ति ते तु जानन्त्येव यत्

**ब्रह्मसत्यं जगन्मिथ्या जीवो ब्रह्मैव नापरः।**[2]

यतः इयं भाषा अमृतज्ञानं प्रवहति, अतः अमृता एव न कदापि मृता। अस्याः भाषायाः स्वाभाविकीं नैसर्गिकीं जिजीविषां दर्शं दर्शमाश्चर्यचकिताः भवन्ति भुवि मानवाः। अविच्छिन्नरूपेण व्यवहार एव अस्याः भाषायाः अमृतत्वम्, न कदापि अस्याः भुविः व्यवच्छेदः अनुभूयते। पुराकालेऽपि इयं लोकभाषा शास्त्रभाषा इदानीमपि वर्त्तते तथा अग्रेऽपि भविष्यति। कस्याश्चिदपि भाषायाः ह्रासस्य बहुविधानि कारणानि भवन्ति। तथैव संस्कृतस्यापि सन्ति नैकानि कारणानि-

**1. शासनद्वारा उपेक्षाभावः -**

सैव भाषा प्रवर्धते या खलु शासनभाषा भवति। किन्तु भारतीयसंविधानस्य प्रणयनकाले संस्कृतभाषा राष्ट्रभाषा भवेदिति प्रस्तावं द्वौ महापुरुषौ आनीतवन्तौ तत्र प्रथमः डा.भीमरावअम्बेडकरः द्वितीयः 'ताजुद्दीनअहमद' महोदयश्चा किन्तु पं.जवाहरलालनेहरूमहोदयेन तत्सर्वं नाङ्गीकृतम्।

**2. संस्कृतभाषायां व्यवहाराभावः इति प्रवादः -**

इदमपि एकं मुख्यं कारणं वर्त्तते। लोकः यां यां भाषां व्यवहरति सैव भाषा वर्धते। अतः संस्कृतज्ञाः इदानीं विरलाः सन्ति।

**3. संस्कृतं धर्मिकभाषा वर्गविशेषस्य भाषा इति प्रवादः -**

संस्कृतभाषायां सर्वविधमपि ज्ञानं राजते, किन्तु लोकः संस्कृतं धार्मिकभाषा पण्डितानाञ्च भाषा इत्येव जानाति। इदमपि संस्कृतस्य ह्रासे प्रमुखं कारणम्।

**4. संस्कृतभाषायाः उच्चारणे लेखने भाषणे च काठिन्यं -**

नियमाधिक्यं व्याकरणस्य प्राधान्यञ्च वर्त्तते। संस्कृतभाषा सर्वभाषापेक्षया विशाला बहुशब्दमयी सन्धिसमासकारणात् कठिना च वर्त्तते। सरलतया भाषामिमां पठितुं वक्तुं लेखितुं वा न शक्नुमः।

**5. संस्कृतभाषायां वर्णाधिक्यम् ध्वनेराधिक्यं च -**

अस्यां भाषायामन्यभाषापेक्षया अधिकाः वर्णाः सन्ति ,इदमप्येकं कारणम्।

यद्यपि उपर्युक्ताः सर्वे दोषाः सन्ति तथापि **'तेजीयसां न दोषाय'**[3] इति लोकोक्त्या संस्कृतस्य सर्वेऽपि दोषाः गुणायन्ते। इयं संस्कृतभाषा सर्वथा परिष्कृता वैज्ञानिकी भाषा च वर्त्तते। अस्याः भाषायाः विज्ञानमत्यन्तमद्भुतं वर्त्तत इति सर्वेऽपि स्वीकुर्वन्ति। प्राच्यविद्याप्रतिष्ठानस्य निदेशकेन डा.जीतरामभट्टेन एकस्मिन् समारोहे उक्तं यत् नासासंस्थायाः वैज्ञानिकाः यदा 'स्पेस ट्रैवलर्स' इत्यस्य कृते यदा संवादाय सन्देशं प्रेषयन्ति तदा आङ्ग्लेत्यादिभाषान्तरा वर्णाः तत्र गत्वा अक्रमरूपतां लभन्ते तेन शब्दानां स्फुटार्थावबोधो न भवति। किन्तु यदा संवादाय संस्कृतं प्रेषितं तदा 'स्पेस ट्रैवलर्स' इत्यनेन सह संवादः स्थापितः यतोहि संस्कृते सर्वेऽपि शब्दाः विभक्तिसंयुक्ताः भवन्ति अस्मात् कारणात् अक्रमाः स्युः सक्रमाः वा विभक्तिसंयोगात् ते कदापि स्वार्थं न परित्यजन्ति। संस्कृतभाषा सङ्गणकस्य षष्ठसप्तमवंशवृक्षस्य (6.7) जनरेशन कृतेऽपि परमोपयोगी भविष्यतीति वैज्ञानिकैः उद्घोषितम्। संगणकाय कथं संस्कृतं-परमोपयोगी वर्त्तते? इत्यप्यत्र लिख्यते-

संस्कृतभाषायां विभक्तीनां कृते पृथक्शब्दाः नोपयुज्यन्ते अपितु तस्मिन् शब्दे एव कामपि मात्रां किमपि अक्षरं वा संयोज्य विभक्तित्वमुपजायते,यथा- हिन्दीभाषायां 'कक्षे' इत्यस्य कृते 'कमरे में' इति द्वौ शब्दौ उपयुज्येते, तथा चाङ्ग्लभाषायां- 'इन द रूम' इति त्रयः शब्दाः उपयुज्यन्ते। अतः संस्कृतभाषायां संक्षेपतारूपीगुणकारणात् कम्प्यूटरप्रोग्रामिंग इत्यस्य कृते श्रेष्ठा भाषेयम्।

संस्कृतभाषायां सप्तविभक्तयः सन्ति सम्भवतः कासुचिदन्यभाषासु विभक्तीनामेतावती संख्या न स्युः। विभक्तीनां साहाय्येन कस्यापि वाक्यस्य समग्रसटीकार्थग्रहणे संस्कृतभाषा एव सक्षमा नान्या भाषा यथा- हिन्दीभाषायां 'से'इति विभक्तेः प्रयोगः विभिन्नरूपेषु भवति तद्यथा-

1. राम से कहा।
2. वाहन से गया।
3. पेड़ से गिरा आदि।

तथैव आंग्लभाषायामपि 'To' इत्यस्य प्रयोगः पृथक -पृथग्रूपेषु भवति तद्यथा-

1. Ram sad to Shyam-
2. Book sends to him-
3. Come to me- Etc-

एतेषु हिन्दी-आंग्लवाक्येषु एकैव विभक्तेः बह्वर्थास्सन्ति अस्मात् कारणात् शाब्दबोधे पदे-पदे भ्रमः समुत्पद्यते। किन्तु संस्कृतभाषायां नास्ति एतादृशो भ्रमः यतोहि तत्र च सन्ति पृथक्-पृथक् विभक्तयः। ताः यथा -

**कर्त्ता कर्म च करणञ्च सम्प्रदानं तथैव च।**
**अपादानाधिकरणञ्च इत्याहुः कारकाणि षट्।।**[4]

एतेष्वतिरिच्य सम्बन्धसम्बोधनौ च वर्तेते विभक्तिरूपेण अतः संस्कृते वाक्यार्थकरणे भ्रमो भवितुं नार्हति यतोहि अस्यां भाषायां या खलु वैज्ञानिकीशाब्दबोधप्रक्रिया क्वचिदपि भाषान्तरे नावलोक्यते। तद्यथा-

'दातारामः ओदनं खादति' इति वाक्यस्य शाब्दबोधः वैयाकरणानां मते एवं भविष्यति- 'दातारामभिन्नैककर्तृकः ओदनकर्मकः वर्त्तमानकालिकः गलबिलाधस्संयोगानुकूलो व्यापारः।' अत एषा भाषा अनुवादस्य कृते श्रेष्ठा वर्त्तते। कस्यापि भाषायाः प्रथमं यदि संस्कृतानुवादो भवति तदा संस्कृतपाठ्यस्य अन्यां कस्यामपि तृतीयभाषायामनुवादकरणेऽपि मूलभाषायाः सर्वेऽपि भावाः प्रायः समानमेव प्राप्यन्ते। अन्यथा कस्याश्चिदपि भाषायाः एतादृशं सामर्थ्यं नास्ति यत् प्रथमभाषातः तृतीयभाषान्तरकरणे मूलभाषायाः तात्पर्य विलुप्तं न स्यात्।

यस्यां देवनागरीलिप्यां संस्कृतं लिख्यते सा लिपिः संसारस्य वैज्ञानिकी तथा च पूर्णा लिपिः वर्त्तते,अस्यां लेखने उच्चारणकरणेन न कोऽपि भ्रमो भवति यतोहि तत्र स्वाराणां व्यञ्जनानाञ्च संख्या पर्याप्ता वर्त्तते। अतः संगणकयन्त्रे ध्वन्याधारितोपयोगानां (Voice Search) कृते श्रेष्ठाभाषा स्वीकृता।

संस्कृतभाषायाः ध्वनिविज्ञानं स्वरविज्ञानञ्च अत्यन्तं महत्वपूर्णं वर्त्तते। कः वर्णः कस्मात् स्थानात् उच्चारणीयः इति सर्वं संस्कृतभाषायां सुनिश्चितं वर्त्तते। तथा चोक्तम्-

**आत्माबुद्ध्या समेत्यार्थान्मनो युङ्क्ते विवक्षया।**
**मनः कायाग्निमाहन्ति स प्रेरयति मारुतम्।**

**मारुतस्तूरसि चरन्मन्द्रं जनयति स्वरम्॥**[5]

संस्कृतभाषा सदृशी नास्ति निखिलब्रह्माण्डस्य कापि अन्या भाषा यस्यां केवला एकाक्षरी (One word Poem) सार्थककविता च स्यात्। किन्तु सा अत्र विराजते-

**न नोननुन्नो नुन्नोनो नाना नानानना ननु।**
**नुन्नोऽनुन्नो ननुन्नेनो नानेना नुन्ननुन्ननुत्॥**[6]

संस्कृतभाषायां निबद्धं शकुनशास्त्रस्याध्ययनस्य इदानीमपि उपेक्षा दृश्यते किन्तु शास्त्रिमदं प्रत्यक्षशास्त्रं वर्त्तते। पशुपक्षिणामिन्द्रियातीतं ज्ञानं भवति अतः ते वर्षा-भूकम्प-ज्वालामुखीत्यादिदुर्घटनानां सूचना पूर्वमेव ददति। अथ प्रसङ्गवशाद् वृष्टिविषयकाः केचन शकुनाः वर्ण्यन्ते-

**न यदा वान्ति पवनश्च स्थलं यान्ति झषादयः।**
**शब्दं कुर्वन्ति मण्डूकास्तदा वृष्टिरनुत्तमा॥**

**नखैर्लिखन्ति मार्जाराः पृथिवीं च यदा भृशम्।**
**लोहानास्मनिचयो विस्रगन्धो यदा भवेत्॥**
**पिपीलिका यदाण्डानि गृहीतोच्चं प्रयान्ति च।**
**सर्पाः वृक्षं समायान्ति तदाबहुजलप्रदाः॥**[7]

परन्तु पशुपक्षीणां भिन्न-भिन्नसमये भिन्न-भिन्नव्यवहाराणां किं तात्पर्यमित्यस्य ज्ञानं किञ्चित् दुष्करमस्ति तथापि शकुनशास्त्रेण सौकर्येण भविष्यति तेन अतिवृष्टि-अनावृष्टि-युद्ध-भूकम्प-ज्वालामुखीत्यादिदुर्घटनानां पूर्वज्ञानात् जन-धनहानिः न्यूना भविष्यति।

संस्कृतं समाजस्य सर्वक्षेत्रेषु आवश्यकं वर्त्तते। किन्तु संस्कृते निबद्धानां वेद-योग-सांख्य-आयुर्वेद- शल्यचिकित्सा-नक्षत्रविज्ञान-धर्मशास्त्र-संगीतशास्त्र-अर्थशास्त्र-राजनीतिशास्त्र-कृषिशास्त्र -भूगर्भशास्त्र- शाकुनविज्ञान- रत्नविज्ञान-गणितविद्या-फलितज्योतिष-धातुविज्ञान-विमानशास्त्र(यन्त्रविज्ञान)-स्वरविज्ञान-शब्दसंक्षेपविद्या-मन्त्रविद्या-तन्त्रविद्या-चौर्यशास्त्र-इतिहासपुराणविद्या-नाट्यशास्त्र-काव्यशास्त्र-नवदर्शनानि-कामशास्त्र-छन्दः शास्त्र-सामुद्रिकशास्त्र-वास्तुकला-मल्लविद्या-रसायनशास्त्र-शिल्पशास्त्र-निरुक्तशास्त्रेत्यादीनां विद्यानामद्यत्वे समाजस्य कृते परमावश्यकता नितरां प्रतीयते। मानवजीवनोपयोगी मानवत्वसम्पादकं चरित्रनिर्मापकञ्च ज्ञानं संस्कृते एव वर्त्तते। अतः अस्माकम् ऋषयः पृथिवीस्थजनानां कृते चरित्रनिर्माणाय उद्घोषयन्ति-

**एतद्देशप्रसूतस्य सकाशाद् अग्रजन्मनः।**
**स्वं स्वं चरित्रं शिक्षेरन् पृथिव्यां सर्वमानवाः॥**[8]

भारतीयानां प्राणतत्वमियं भारतीयासंस्कृतिः षोडशसंस्काराश्च सन्ति। संस्कृतेः संस्काराणाञ्च शिक्षा संस्कृतेनैव कर्तुं शक्यते नान्योपायेन यतः सर्वेऽपि भारतीयाः आचारविचाराः अस्माकं धर्मशास्त्रेषु वेदेषु पुराणेषु च निबद्धास्सन्ति। मानवजीवनस्य ये खलु विविधाः संस्काराः ते सर्वेऽपि अस्माकं धर्मशास्त्रेषु स्मृतिग्रन्थेषु च वर्णितास्सन्ति। अतः संस्कृतभाषामन्तरा संस्कृतेः संस्काराणाञ्च रक्षणं कर्तुमशक्यम्।

➤ **सन्दर्भः**

1. महाभारतशान्तिपर्व 231-56
2. वेदान्तसारभूमिकायाम्

3. समयोचितपद्यमालिका

4. अनुवादचन्द्रिकायाम्

5. पाणिनीयशिक्षयाम्-6,7

6. भारवे: श्लाकोऽयम्-तस्यायमर्थ:-हे नानानना:=हे भिन्न-भिन्नमुखधारिण: शिवसैनिका:, ऊननुन्न: ना न = निकृष्टद्वारा व्रणित: मनुष्य: वीरपुरुषो नास्ति। नुन्नोन: ना अना ननु=नापि निकृष्टस्य शारीरिकक्षतिकर्त्ता वीरपुरुषोऽस्ति। ननुन्नेन: नुन्न: अनुन्न:=यस्य स्वामी अक्षत: सैवपुरुष: क्षतो भूत्वापि अक्षत एव वर्त्तते। नुन्ननुन्ननुत् न अनेन = क्षतेऽपियोव्यक्ति: प्रहरति सोऽपि निर्दोषो न भवति।

7. मयूरचित्रम्-15-9/10/12

8. मनुस्मृति:-2 अध्याये

➢ **सन्दर्भग्रन्था:**


1. संस्कृत साहित्य का समीक्षात्मक इतिहास- आचार्य कपिलदेव द्विवेदी।
2. वैयाकरणसिद्धान्तकौमुदी-भट्टोजिदीक्षित(गोपालदत्त पाण्डेय)।
3. भारत में संस्कृत की अनिवार्यता क्यों ? -डा.भगीरथप्रसाद त्रिपाठी।
4. वैयाकरणभूषणसार:- कौण्डभट्ट:(चन्द्रिकाप्रसाद द्विवेदी)।
5. मयूरचित्रकम्-नारदमुनिभाषितम्(अनुभूति चौहान)।
6. मनुस्मृति:-कुल्लूकभट्टीका सहिता।
7. समयोचितपद्यमालिका- गङ्गाधरद्राविण:।
8. अनुवादचन्द्रिका- डा. चक्रधरनौटियाल।
9. www-Hindujagriti-org
10. http%@@princeagra-blogspot-in2014.04 blog&post_14-html
11. http%@@readerblogs-navbharattimes-indiatimes-com@
12. www-sanskrit-nic-in






# गृहप्रवेशमुहूर्तविमर्शः



**डा. मुकेशकुमारः**
**सहायकाचार्यः (सं.), ज्योतिषविभागः**

समग्रेऽपि संसारे भविष्यविषयिणी जिज्ञासा सर्वस्यापि मानवस्य भवति एव। अस्याः जिज्ञासायाः समाधानस्य वस्तुतः एक एव उपायः ज्योतिषशास्त्रम्। ज्योतिषशास्त्रं हि मुख्यतया कालविधाननिमित्तं प्रावर्तितं पूर्वैः आचार्यैः, येन यज्ञादिकार्याणि नियतकाले सम्पाद्य उत्तमस्य फलस्य प्राप्तिः सुकरा भवेत्। कालान्तरे हि विविधभागेषु विभक्तस्य अस्य शास्त्रस्य मुख्यरूपेण स्कन्धत्रयमुक्तम् आचार्येण वराहमिहिरेण। तद्यथा- 'ज्योतिषशास्त्रमनेकभेदविषयं स्कन्धत्रयाधिष्ठितम्' इति। ज्योतिषस्य त्रिष्वपि स्कन्धेषु प्रमुखे संहिताप्रकरणे यद्यपि सामूहिकफलं लभ्यते यथापि वर्तमानकाले स्वीयं विस्तृतं स्वरूपं प्राप्नुवन्तः शकुन-वास्तु-मुहूर्तादयः विषयाः अपि अत्रैव अन्तर्भवन्ति। सम्प्रति तु एतेषां वास्तु-शकुन-मुहूर्तादिविषयाणां पृथक-पृथक् अपि स्वीयम् महद् अस्तित्वं वर्तत एव।

कालनिर्धारणं यद्यपि ज्योतिषशास्त्रस्य एव प्रधानः विषयः तथापि मुहूर्तनिर्णयस्य सन्दर्भे ज्योतिषेन सहैव धर्मशास्त्रस्य अपि महती प्रासङ्गिकता वरीवर्ति। अत एव प्रत्येकमपि धर्मशास्त्रीये ग्रन्थे विशिष्य स्मृतिषु सर्वस्यापि व्रतस्य अथवा पर्वणः विषये मुहूर्तनिर्धारणाय महान्तः वादाः जायन्ते। मुहूर्तनिर्णये हि अत्यन्तं महत्त्वभूतः अंशः भवति नूतनगेहे प्रवेशस्य मुहूर्तः।

प्रत्येकमपि मानवस्य इच्छा भवति यद् आदिनं महत्कार्यं विधाय सायंकाले गृहमागत्य स्वपरिवारेण सह सानन्दं समयः यापनीयः इति। कदाचित् तु एवं सम्भवति, बहुधा तु सर्वविधसौकर्ये सत्यपि वृथा मनोविषादकरः विवादः कलहः च गृहे जायते। अत्र कारणानि यद्यपि सामाजिक-मनोवैज्ञानिकानि नैकविधानि अपि भवितुम् अर्हन्ति। तथापि ज्योतिषशास्त्रदृष्ट्या पश्यामः चेद् असमीचीनवास्तुयुक्तगृहस्य निर्माणेन, असमीचीने मुहूर्ते नवीनगृहे प्रवेशकारणाद् अथवा अनुत्तमे समये गृहनिर्माणकारणात् गृहक्लेशाः जायन्ते। अतः उत्तमे मुहूर्ते एव नवीने गृहे प्रवेशः विधातव्यः इति अस्माकं ज्योतिषशास्त्रं धर्मशास्त्रं च निगदति। नूतने गृहे प्रवेशाय उत्तमः कालः कः? केन प्रकारेण तत्र प्रवेशः कर्तव्यः इत्यादि प्रश्नानां समाधानं उच्यते मत्स्यपुराणे -

> **''जीर्णोद्धारे तथोद्याने तथा गृहनिवेशने।''**
> **नवप्रासादभवने प्रासादपरिवर्तने।**
> **द्वाराभिवर्तने तद्वत्प्रासादेषु गृहेषु च**
> **वास्तुप्रशमनं कुर्यात्पूर्वमेव विचक्षणः।**

एतदनुसारं सर्वादौ गृहवास्तुशान्तिः अवश्यं कर्तव्या, ततःपरमेव नवीने गृहे जीर्णोद्धरितगृहादिषु वा प्रवेशः कर्तव्यः। तदनु श्रेष्ठब्राह्मणान् अग्रे कृत्वा तेषां कृते दक्षिणां च दत्त्वा तान् भोजयित्वा एव गृहप्रवेशः कर्तव्यः। तद्यथा

- "कृत्वाग्रतो द्विजवरान् पूर्णकुम्भं दध्यक्षताम्रदलपुष्पफलोपशोभनम्। दत्त्वा हिरण्यवानानि तथा द्विजेभ्यो माङ्गल्यशान्तिनिलयं स्वगृहं विशेच्च" (मत्स्यपुराणम्) सर्वादौ गृहद्वारात् प्रथमप्रवेशनिमित्तं तिथिविषये उच्यते बृहस्पतिना -

**नन्दायां दक्षिणद्वारम् भद्रायां पश्चिमेन तु।**
**जयायामुत्तरं द्वारं पूर्णायां पूर्वतो विशेत्॥**

गृहप्रवेशसन्दर्भे मुहूर्तविचारकाले तिथि-मास-पक्ष-अयन-ऋतु-वर्षादिविषयाणां सम्यक् विवेचनं कार्यमेव। तदेव अग्रतः वक्ष्यते।

**अयनमासविचारः -**

व्यवहारतत्त्वे एवमुच्यन्ते शुभायनमासाः -

**सौम्यायने श्रावणमार्गपौषे जन्मर्क्षलग्नोपचयोदयेंऽशे।**
**वामं गतेऽर्के गृहवास्तुपूजां कृत्वा विशेद्वेष्मभकूटशुद्धम्॥**

एतदनुसारं उत्तरायणे एव गृहप्रवेशः शुभः भवति, तत्रापि श्रावण-मार्गशीर्ष-पौषमासेषु जन्मनक्षत्रे लग्नाभिवृद्धौ वास्तुपूजां कृत्वा एव गृहप्रवेशः कार्यः। अस्मिन् विषये एवमुच्यते रामदैवज्ञेन मुहूर्तचिन्तामणौ -

**"सौम्यायने ज्येष्ठतपोऽन्त्यमाधवे यात्रानिवृत्तौ नृपतेर्नवे गृहे। स्याद् वेशनम्..."**[1]

एवमेव नारदेनापि उच्यते -

**प्रवेशो मध्यमो ज्ञेयः सौम्यकार्तिकमासयोः।**
**माघफाल्गुनवैशाखज्येष्ठमासेषु शोभनः॥**

**अकपाटमनाच्छन्नमदत्तबलभोजनम्।**
**गृहं न प्रविशेद्धीमान् आपदामाकरो हि तत्॥**

किमर्थ माघादिषु एव मासेषु नवे गृहे प्रवेशः कार्यः? इत्यस्य फलानि निरूप्यन्ते आचार्य वसिष्ठेन -

**"माघेऽर्थलाभः प्रथमप्रवेशे पुत्रार्थलाभः खलु फाल्गुने च ।"**

**चैत्रेऽर्थहानिर्धनधान्यलाभो वैशाखमासे पशुपुत्रलाभः।**
**ज्येष्ठे च मासेषु परेषु नूनं हानिप्रदः शत्रुभयप्रदश्च।।**[2]

एवं प्रकारेण पश्यामश्चेत् माघ-फाल्गुन-चैत्र-वैशाखमासेषु गृहप्रवेशः सुखदः एव। अतः एतत्सर्वं विलोक्य एव मुहूर्तनिर्णयः कार्यः।

**दिनविचारः -**

कस्मिन् दिने विहितः गृहप्रवेशः शुभाय कल्पत इति उच्यते वसिष्ठेन -

**"चन्द्रजार्यसितवारेषु च श्रीकरं सुतमहार्थलाभदम्।**
**सूर्यसूनुदिवसे स्थिरप्रदं किन्तु चौरभयमत्र निर्दिशेत्।।"**

सामान्यतः नूतने गृहे प्रवेशार्थं बुधवासरः गुरुवासरः शुक्रवासरश्च धनपुत्रादिकारकाः भवन्ति, अतः एतेषु दिनेषु गृहप्रवेशः कर्तुं शक्यः। विशेषतः शनिवासरे गृहप्रवेशः स्थिरप्रदः भवति किन्तु अत्र चोरभयं भवति इति वसिष्ठाचार्यस्य कथनम्। अन्यच्च रविवासरः स्थिरवासरनाम्ना सुप्रसिद्धः। अतः तत्र गृहनिर्माण- गृहप्रवेशादिशुभकार्याणि अवश्यं फलीभूतानि भवन्ति। तद्यथा -

उत्तरात्रयरोहिण्यो भास्करश्च ध्रुवं स्थिरम्।
तत्र स्थिरं बीजगेहशान्त्यारामादिसिद्धये॥ इति।[1]

**गृहप्रवेशे नक्षत्रनिर्णयः -**

यानि नक्षत्राणि सामान्यतः जीर्णगृहप्रवेशे निषिद्धानि उच्यन्ते तानि नवीने गृहे शुभानि भवन्ति इति ज्योतिर्विदः राद्धान्तः। विशेषतः पुष्य-स्वाती-धनिष्ठादीनि नक्षत्राणि अत्र शुभानि उच्यन्ते। तदपि उच्यते ज्योतिःप्रकाश-

प्रवेशो नूतने हर्म्ये ध्रुवैर्मैत्रैः सुखाप्तये।
पुष्यस्वातीयुतैस्तैश्च जीर्णे स्याद्वासवद्वये॥ इति।[2]

एवमेव गृहप्रवेशस्य शुभनक्षत्राणि उच्यन्ते रत्नकोशे अपि -

पुष्ये धनिष्ठामृगवारुणेषु स्वायंभुवर्क्षे त्रिषु चोत्तरासु।
अक्षीणचन्द्रे शुभदो नृपस्य तिथावरिक्ते च गृहप्रवेशः॥

**गृहप्रवेशे लग्ननिर्णयः -**

महान्तः ज्योतिर्विदः आचार्याः गोविन्ददैवज्ञाः गृहप्रवेशे लग्नविषयकं वचनं इत्थं प्रस्तुवन्ति-"जन्मर्क्षं जन्मराशिः जन्मलग्नं प्रसिद्धम्। ताभ्यामुपचये तृतीयषष्ठैकादशमस्थेऽन्येषु यथा स्थिराख्यराशिषु लग्नगतेषु सत्सु गृहप्रवेशः शुभम्''[3]। एतदनुसारं यदा जन्मनक्षत्रं जन्मराशिः वा उपचयभावेषु अर्थात् ३-६-१०-११ भावेषु विद्यमानः स्यात् स्थिरराशिः लग्नगतः स्यात् तस्याम् अवस्थायां विहितः गृहप्रवेशः अवश्यमेव शुभदः स्यादिति। एवमेव रत्नमालायाम् अपि एतद्विषये उच्यते -

"कर्तुर्भोपचयगाश्च विलग्ने राशयः शुभफलाय भवन्ति" इति।

इत्थं सर्वविधतिथि-वार-नक्षत्र-लग्नादिकं विलोक्य एव यदि शुभे मुहूर्ते गृहप्रवेशः क्रियते तदा गृहस्थः निश्चयेन सुखी भूत्वा धर्मार्थकाममोक्षादिकं पुरुषार्थचतुष्टयं सम्प्राप्य स्वजीवनस्य वास्तविकलक्ष्यं प्राप्नुयात् इति।

➢ **सन्दर्भ ग्रन्थाः**


1. मुहूर्तचिन्तामणिः, श्रीरामदैवज्ञप्रणीता, चौखम्बा सुरभारती प्रकाशन, वाराणसी।
2. धर्मसिन्धुः, चौखम्बा सुरभारती प्रकाशन, वाराणसी।
3. निर्णयसिन्धुः, चौखम्बा सुरभारती प्रकाशन, वाराणसी।


➢ **सन्दर्भाः**

1. मुहूर्तचिन्तामणिः, रामदैवज्ञविरचिता, 13.1
2. पीयुषधरमिश्र, अ. 13, पृ. 610
3. मूहूर्तचिन्तामणिः, 2.2
4. पीयुषधारमिश्र, (मु. चि.), पृ. 812
5. पीयुषधरमिश्र टीका (मु. चि.), पृ. 612



# पदस्वरूपम् : एकं विश्लेषणम्



**हरीशडङ्ग्वालः**
**शोधछात्रः व्याकरणविभागः**

**प्रा**चीन-भारतीयभाषाविद्भिः संस्कृतभाषायाः पदानां वर्गीकरणं विभिन्नैः प्रकारैः विभक्तं कृतम्। पुनश्च पदेष्वपि प्रकृतिप्रत्ययसंस्कारद्वारा कल्पना वैयाकरणैः कृता। तस्योच्चारणस्य व्यवस्थापि स्वीकृता, यतोहि भाष्यकारेण निगदितं यत् "अपदं न प्रयुञ्जीत" अतः पदस्य स्वरूपं प्रकारश्चोल्लिखितं वर्तते। पाणिनिना पदविषये 'सुप्तिङन्तं पदं' इत्याख्ये सूत्रे सुप्तिङ्माध्यमेन द्विप्रकारिका व्यवस्था कृता। पाणिनेः कालनिर्धारणं सर्वसम्मतेन 500 ई० पू० स्वीकृतं तथा यास्काचार्यस्य कालनिर्धारणं सर्वसम्मतेन 700-800 ई० पू० स्वीक्रियते अतः वक्तुं शक्यते यत् पाणिनेः कालात्प्राग् यास्काचार्येण पदवर्गीकरणे नामाख्यातोपसर्गनिपाताश्च निर्धारिताः। नामाख्यातयोः लक्षणविषये यास्कः क्रमशः सत्वभावयोः नाम्ना व्यवहरति। उभयोः शब्दयोरुत्पत्तिः समानार्थकधातोरभवत् तौ च धातू अस् भू चेति। अनेन ध्वन्यते यत् नामाख्यातयोर्मध्ये किमपि मौलिकमन्तरं नास्ति केवलं अवस्थायाः (कमहतमम) अन्तरं वर्तते यावत् पर्यन्तं असत्वभूतात्मिकायाः क्रियायाः व्यापारः प्रचलति तावत् पर्यन्तं 'भावनाम्ना' कथ्यते किन्तु सिद्ध क्रिया वर्तते तदा 'सत्वनाम्ना' व्यवह्रियते। यथा पठनक्रियायाः व्यापारकाले 'पठति' इति व्यवह्रियते किन्तु पठनस्य निष्पन्ने सति 'पाठः' इति कथ्यते।

पाणिनिव्याकरणे क्रियायाः द्विप्रकारिकावस्था 'भाव' नाम्ना व्यवह्रियते यस्य भेदद्वयं निष्पद्यते। साध्यावस्थापन्नभावः सिद्धावस्थापन्नभावश्च। निरुक्तकारः साध्यावस्थापन्नं भावनाम्ना तथा सिद्धावस्थापन्नं सत्वानाम्ना कथयति। किन्तु साहित्यशास्त्रे अन्तिमामेवावस्थां भावं कथयति भावः अन्तिमः विकारः। यास्कानुसारं आख्यातनामयोः क्रमशरुदाहरणं - गच्छति एवं गतिः वर्तते। यास्केन निरुक्तशास्त्रे येषां चतुर्णां पदानामुल्लेखः कृतः ते नामाख्यातोपसर्गनिपाताश्च।

निरुक्तशास्त्रे नामविषये लिखितं-सत्वप्रधानानि नामानि, सत्वं नाम द्रव्यं तच्चद्रव्यं गुणाश्रयम्। यथा घटः, पटः, शाटिका, पुस्तकमित्यादयः। यद्यपि एतेषु शब्देषु क्रिया विद्यते तथापि आख्यातपदवदमूर्तत्वरूपं न विद्यते। क्रियायाः गौणभावः तं मूर्तं नयति। द्रव्याणां बोधात्मकः शब्दः प्रातिपदिको भवति एते सुप्प्रत्यययुक्ताः भवन्ति। कृदन्तस्थलेष्वपि एते प्रत्ययाः भवन्ति यथा पठितव्यम्, पाठकः, गतवान् इत्यादयः। अतः पतञ्जलिनापि कथितम् कृतप्रत्ययविहितः भावोऽपि (क्रिया) द्रव्यवत् परिदृश्यते। आख्यातस्वरूपविषये यास्काचार्यः उवाद यत् 'भावप्रधानमाख्यातम्' अर्थात् यत्र भावस्य प्राधान्यता भवति तत्र आख्यातस्य ज्ञानं परिलक्ष्यते यथा व्रजति, पचति, गच्छति इत्यादयः। एतेषु पदेषु भावानां प्राधान्यता वर्तते। पाणिनिव्याकरणे आख्यातविषये 'भूवादयो धातवः' इति निर्दिष्टः। यत्र क्रियावाचिनो भ्वादयो धातुसंज्ञाः भवति स च धातुः तिङ्प्रत्ययसंयोगेनाख्यातरूपं व्यपदिश्यते। सः धातुः सकर्मकाकर्मकसंयोगेन द्विप्रकारिको वर्तते। कः धातुः सकर्मकः कश्चाकर्मकः। इत्यस्मिन् विषये एका कारिका निर्दिष्टा वर्तते।

**लज्जा-सत्ता-स्थिति-जागरणं वृद्धिक्षयभयजीवितमरणम्।**
**शयनक्रीडारुचिदीप्त्यर्थं धातुगणं तमकर्मकमाहुः।।**

कारिकायामस्यां येषां येषां धातूनां परिगणना वर्तते। तेषां स्वभावोऽकर्मकः शेषे सामान्यरूपेण सकर्मकत्वं विध ीयते। किन्तु कदाचिदुपसर्गाणां संयोगेनापि धातूनामकर्मकसकर्मयोः परिवर्तनं भवति एतद्विषयेऽपि लिखितम्

**उपसर्गेण धात्वर्थो बलादन्यत्र नीयते।**
**प्रहाराहारसंहाराविहारपरिहारवत्।।**

अतः यास्काचार्येण चत्वारिपदजातानि इत्याख्ये स्थले उपसर्गस्यापि स्थानं प्रदत्तम्। किन्तु उपसर्गाणां लक्षणविषये न यास्केन प्रतिपादितं नैव पाणिनिनेति। निरुक्तशास्त्रे उपसर्गाणां विषये विभिन्नऋषीणां भिन्नभिन्नं मतम्।

शाकटायनमतानुसारम् न निर्बद्धा उपसर्गा अर्थान्निराहुरिति। नामाख्यातयोस्तु कर्मोपसंयोगद्योतका भवति। अर्थात्-उपसर्गाः स्वतन्त्ररूपेणार्थं न बोधयति, अपितु नामाख्यातसंयोगेनार्थान्बोधयति अर्थादुपसर्गाः द्योतकाः भवन्ति न तु वाचकाः। उपसर्गाणां द्योतकत्ववाचकत्वविषये गार्ग्यऋषिः वदति उच्चावचाः पदार्था भवन्तीति। उच्चावचाः नाम अनेकार्थेषूपसर्गाणामर्थो भवति। अन्यस्मिन् शब्दे वाचकाः उपसर्गाः। यस्काचार्यः पाणिनिश्चोपसर्गाणां निपातानां वा निश्चितं लक्षणं न प्रतिपादितवन्तौ। तथापि प्रकारविषये पाणिनिमतानुसारं द्वाविंशति (22) उपसर्गाः निर्धारिताः। यास्कानुसारं विंशत्युपसर्गाः (20) विद्यन्ते। यतोहि अनेन निस्-निरुपसर्गयोः दुस्-दुरुपसर्गयोः च पार्थक्यं न कृतं। उपसर्गाः क्रियायोगे (पा० सू० 1/4/59) सूत्रं वीक्ष्येदं ज्ञायते यत् पाणिनिमतानुसारमुपसर्गाः द्योतकाः सन्ति स्वतन्त्ररूपेण नास्ति कोऽप्यर्थः। शाकटायन-यास्क-वैयाकरणाः उपसर्गाणां द्योतकत्वपक्षे बलं प्रददति। उपसर्गैः सह धात्वर्थे यत्किमपि परिवर्तनं भवति तत्परिवर्तनं वस्तुतः धातावेव भवति। धातुपाठेऽपि नैव सोपसर्गयुक्तधातूनां पाठः। अतः उपसर्गद्वारा विकृतोऽर्थः धातोरेव। उपसर्गाणां कार्यं प्रदीपवत्भवति। यथा अन्धकारे निहितानि वस्तूनि प्रदीपसंयोगेन परिदृश्यन्ते, किन्तु वस्तुषु निहितगुणध र्माः वस्तुष्वेव विद्यन्ते तथैवोपसर्गेष्वपि भवति। निरुक्तशास्त्रे यास्केन चतुर्थं पदं स्वीकृतम् निपातः।

निपातविषये यास्काचार्यः उवाद यत् उच्चावचेष्वर्थेषु निपतन्ति। स च उपमार्थे, कर्मोपसंग्रहार्थे पादपूरणार्थे च भवति। एतेषामुदाहणानि वैदिकसाहित्ये विशेषरूपेण प्राप्यन्ते। तेषामेते चत्वार उपमार्थे भवन्ति। ते - इव, न, चित्, नु एवं प्रकारेण कर्मोपसंग्रहणे पादपूरणे च प्रयोगः क्रियते। निपातानां विषये पाणिनिव्याकरणे एतानि सूत्राणि प्राग्रीश्वरान्निपाताः (1/4/56), चादयोऽसत्वे (1/4/57), प्रादयः (1/4/58)। एवं प्रकारेण निपातां द्योतकत्ववाचकत्वविषये उपसर्गवदेतेषामपि द्योतकत्वं वैयाकरणैः स्वीक्रियते किन्तु नैयायिकाः अत्र वाचकत्वं स्वीकुर्वन्ति।

एवं वक्तुं शक्यते यत् पदानां विश्लेषणं निरुक्तशास्त्रे, व्याकरणशास्त्रे, अन्यस्मिन् च शास्त्रे तत्तदाचार्यैः तत्तच्छास्त्रे कृतम् येन पदानां स्वरूपमाधिक्येन ज्ञातुं शक्नुमः।



# न्यायमतेन वृत्तिनिरूपणम्



**अंशुमानपाठकः**
**शोधछात्रः, न्यायविभागः**

**न्याय**शात्रम् "आन्वीक्षिकी" विद्यारूपेण अभिहितं वर्तते। जीवने सर्वत्रैव अस्याः विद्याया उपयोगिता परिदृश्यते। तथा च उत्तम्। -

**प्रदीपः सर्वविद्यानामुपायः सर्वकर्मणाम्।**
**आश्रयः सर्वधर्माणां विद्योद्देशे प्रकीर्तिता॥**

**(न्यायभाष्यम् 1/1/1)**

न्यायदर्शने चत्वारि प्रमाणानि स्वीकृतानि। तानि च-

(1) प्रत्यक्षम् (2) अनुमानम् (3) उपमानम् (4) शब्दः। प्रमा करणम् प्रमाणम्। का प्रमा? यथार्थानुभवः प्रमा। तद्वति तत् प्रकारकः अनुभवः यथार्थः अनुभवः इति उच्यते। अर्थात् प्रमाणेन वस्तुनः यथार्थानुभवः भवति।

- प्रत्यक्षप्रमाणम् इन्द्रियम्।
- लिंङ्गपरामर्शः अनुमानम्।
- सादृश्यज्ञानम् उपमानम्।

प्रत्यक्ष-अनुमान-उपमानानां प्रमाणानां वर्णनं कृत्वा शब्दप्रमाणविषये वर्णनां करोमि। महर्षिगौतमेन उक्तम्- "आप्तोपदेशः शब्दः।" तदनुसारेण प्राचीनपथिनः आप्तोच्चरितं शब्दं प्रमाणरूपेण स्वीकृतवन्तः। नव्यमतानुसारी नैयायिकः विश्वनाथाचार्यः पदज्ञानमेव शब्दप्रमाणम् इति स्वीकृत्य स्वाभिमतम् प्रतिष्ठापितवान्।

**पदज्ञानन्तु करणं द्वारं तत्र पदार्थधीः।**
**शाब्दबोधः फलं तत्र शक्तिधीः सहकारिणी॥**
**न्यायसिद्धान्त मुक्तावली/कारिका-81**

मौनीव्यक्तिः यदा स्वाभिप्रायं लिखित्वा अथवा हस्तादिचेष्टया किञ्चित् प्रकाशयति तदा शब्दोच्चारण-व्यतिरेकेण एव शाब्दवोधः उत्पन्नः भवति। यदि केवलम् उच्चारितपदमेव शब्दप्रमाणम् इति उच्यते चेत् तर्हि अत्र कार्य-कारण-भावस्य-हानिः अर्थात् व्यातिरेकव्यभिचारः दोषः भवति। किन्तु यदि पदाज्ञनं शब्दप्रमाणरूपेण स्वीक्रीयते तर्हि दोषस्य परिहारः भवति। शारीरिकचेष्टादेः आदौ-पदस्य ज्ञानं भवति पश्चाद् यथारीति शाब्दबोधः उत्पन्नः भवति।

पदेन सह पदार्थस्य एकः विशेषसम्बन्धः वर्तते येन निर्दिष्टपदश्रवणादनन्तरमेव एकस्य निर्दिष्टपदार्थस्य स्मरणं भवति। स्मारकपद-स्मृतपदार्थयोः उभयोः यः सम्बन्धः वर्तते सैव वृत्तिरिति उच्यते। पदपदार्थयोः वृत्तिसम्बन्धः द्विविध : - शक्तिः लक्षणा चेति।

मीमांसकाः शक्तिः पदार्थान्तरः इति मन्यन्ते। तदभिमतं निरसनाय, ईश्वरेच्छैव शक्तिरिति नैयायिकाः वदन्ति। अस्मात् पदाद् अयमर्थः वोद्धोव्य अथवा इदम् पदम् अमुम् अर्थम् बोधयतु - ईश्वरस्य एतादृशी इच्छैव शक्तिनामिका वृत्तिः भवति। ईश्वरस्य इच्छानुसारेणेव वयम् निर्दिष्टपदाद् निर्दिष्टार्थस्य ज्ञानं प्राप्नुमहः। अनादि-कालीनवैदिकसम्प्रदायेन पदस्य अर्थः ईश्वरेच्छया नियन्त्रिता प्राप्यते। यथा - चन्द्रार्कयोः।

अत्र प्रश्नः जायते- ईश्वरेच्छा यदि निर्दिष्टपदाद् निर्दिष्टपदार्थावबोधस्य कारणं भवति तर्हि कथम् पितृनाम्ना पुत्रविशेषस्य ज्ञानं भवति इति। यतः तत्र पितृनाम्नि ईश्वरेच्छयाः अवकाशः नास्ति। अतः पितानामकरणे किम् प्रमाणम्? तद्विषये नैयायिकः उक्तवान् - आधुनिक सङ्केतोऽपि शक्तिः इति, "एकादशेऽहनि पिता नाम कुर्याद्" इति विधि वाक्यम् वर्तते।

परन्तु इतोऽपि संशयः भवति। यस्मिन् स्थले स्वातन्त्र्येण आधुनिकपुरुषकृता संज्ञा यथा - व्याकरणे नदी, वृद्धि इत्यादयः तत्र कथम् शाब्दबोधः सम्भवेत्? तत्र कस्यचित् प्राचीन-नैयायिक-सम्प्रदायस्य मतेन शक्तिभ्रमाद् शाब्दबोध : भवति। परन्तु यः ईश्वरं न स्वीकरोति तस्य कथम् शाब्दवोधः भवति? तद्विषये नव्यनैयायिकः उक्तवान्-न तत्र ईश्वरेच्छा, परन्तु निर्दिष्टपदाद् निर्दिष्टार्थावबोधनाय आप्तपुरुषीय शक्तिः तत्र कारणम्।

पदे शक्तिरस्ति तथापि पदश्रवणमात्रेण अर्थबोधः भवति इति न मन्तव्यम्। पदज्ञानात् पदार्थज्ञानाय शक्तिज्ञानमावश्यकम्। शक्तिज्ञानम् तत्र सहकारीकारणम्। यस्य शक्तिज्ञानमस्ति तस्येव पदश्रवणानन्तरं पदार्थज्ञानं भवति। अधुना प्रश्नो अस्ति शक्तिज्ञानं कथं सम्भवति। तद्विषये उक्तम् -

**शक्तिग्रहः व्याकरणोपमानकोषाप्तवाक्याद् व्यवहारतश्च।**
**वाक्यस्य शेषाद् विवृतेर्वदन्ति सान्निध्यतः सिद्धपदस्य वृद्धाः॥**

न्या.सि.मु./शब्द.खण्डः

व्याकरणम्, उपमानम्, कोशः, आप्तवाक्यम्, व्यवहारः, वाक्यशेषः, विवृत्तिः, सिद्धपदसान्निध्यम्, एतैः अष्टकारणैः, पदे शक्तिग्रहः भवति।

(1) **व्याकरणम्** - धातु-निपात-प्रत्यय- समासानां शक्तिग्रहः व्याकरणाद् भवति। भू-धातोः शक्तिः सत्तायाम्, गम् धातोः शक्तिः गमने, 'च' इति निपातस्य शक्ति समुच्चये, सु, औ, जसादिनां शक्तिः एकत्वादि संख्यायामस्ति। अतः एतेषाम् शक्तिग्रहः व्याकरणाद्भवति।

(2) **उपमानम्** - उपमानादपि पदे शक्तिग्रहः भवति। "यथा गौः तथा गवयः" इति् सादृश्यज्ञानात्म-कोपमानप्रमाणेन गोसदृशपशौ गवयपदस्य शक्तिज्ञानं भवति।

(3) **कोशः** - कोशग्रन्थादपि शब्दस्य शन्तिज्ञानं भवति। यथा-अमरः-निर्जरः-देवः-सुरः प्रभृति शब्दैः देवे शक्तिग्रहः भवति।

(4) **आप्तवाक्यम्** - आप्तवाक्यादपि शन्तिज्ञानं भवति यदि आप्तव्यक्तिः वदति- "कोकिलः पिकपदवाच्यः"। अस्य वाक्यस्य श्रवणाद् अनन्तरम् श्रोतुः पिकशब्देन कोकिले शक्तिज्ञानं भवति।

(5) **व्यहारः** - व्यवहारादपि पदे शक्तिग्रहः भवति। व्यवहाराद् बालस्य शक्तिज्ञानेच्छावतः शक्तिज्ञानं भवति। यदा कोऽपि प्रयोजकः वृद्धः वदति-"घटमानय", तदा तच्छ्रुत्वा प्रयोज्यः वृद्धः घटं नयति। सन्निकटस्थः

बालकः एतद् सर्वम् अर्थात् प्रयोजकवृद्धस्य वाक्योच्चारणं प्रयोज्यवृद्धस्य घटानयनादिकं दृष्ट्वा अनुमिनोति-घटानयनं यत् कार्यं तत् "घटमानय" वाक्यस्य फलमासीत्। ततश्च घटं नय गामानयेत्यादिवाक्याद् आवापोद्वापाभ्यां घटादिपदानां घटादौ शक्तिं गृह्णाति।

(6) **वाक्यशेषः** - वाक्यशेषेन अपि शक्तिज्ञानं भवति। यथा- यवशब्दे शक्तिज्ञानम्। शास्त्रे उक्तमासीत्- "यवमयः चरुः भवति।" यवपदस्य कोऽर्थः? आर्याणां मतेन दीर्घशूकविशिष्टसस्यमेव यवपदेन अभिधीयते। परन्तु म्लेच्छानुसारेण यव पदेन कङ्गुनामकं सस्यं बोध्यते। अतः अत्र स्वाभाविकतया प्रश्नः जायते यवशब्दस्य शक्तिः कुत्रास्ति? दीर्घशूकविशिष्टसस्ये उत कङ्गुनामकसस्ये? अस्मिन् स्थले सन्देहनिवारणाय शास्त्रवाक्यमासीत् येन दीर्घशूकविशिष्टे-सस्य-विशेषे एव यवशब्दस्य शक्तिः ज्ञायते-

**यत्रान्या औषधयो म्लायन्ते अथैते मोदमानास्तिष्ठन्ति।**

**वसन्ते सर्वशस्यानां जायते पत्रशातनम् तदा।**
**मोदमानाश्च तिष्ठन्ति यवाः कणिशशालिनः॥ इति॥**

(7) **विवृत्तिः** - विवृत्या अथवा विवरणेन शक्तिग्रहः भवति। यथा - देवदत्तः पचति। अत्र पचति पदस्यार्थं यदि कोऽपि न जानाति, तर्हि तत्र पाकं करोति इति पदान्तरेन अर्थगमनं भवति। पदान्तरेन अर्थकथनमेव विवरणमित्युच्यते।

(8) **सिद्धपदसान्निध्यम्** - सिद्धपदाद्सान्निध्ये सति अर्थात् प्रसिद्धपदसान्निध्ये सति सन्निहित-शब्दस्य शक्तिग्रहः भवति। यः पिकशब्दस्य अर्थं न जानाति परन्तु सहकारतरौ कोकिलः एव मधुरं रौति इति जानाति, सः यदि कदापि- 'इह सहकारतरौ मधुरं रौति पिकः' इति वाक्यं श्रुणोति तर्हि तत्र सहकारतरौ, मधुरं, ध्वनिं इत्यादिनां प्रसिद्धपदानां सान्निध्यवशाद् एव तेन अवगम्यते यत् पिकः एव कोकिलः इति। एवं प्रकारेण प्रसिद्धपदसान्निध्येन पिकपदस्य कोकिले शक्तिग्रहः भवति।



# द्विकर्मकादिधातूनां विषये विचारः


## श्यामदेवः
शास्त्रिद्वितीयवर्षम्, व्याकरणछात्रः




**वि**दुरेव सर्वे यल्लकारा तत्तद्गणपठितधातुभ्यः **'लः कर्मणि च भावे चाकर्मकेभ्यः'** इत्येतेन सूत्रेण सकर्मकेभ्यः कर्मणि कर्तरि चाकर्मकेभ्यो भावे कर्तरि भवन्तीति।

यथात्र-सकर्मकात् **'दृशिर् प्रेक्षणे'** धातोरित्यस्माद् कर्तरि **"देवदत्तोग्रामं पश्यति'** इत्यत्र **'यस्मिन्प्रत्ययो भवति स उक्तः'** अभिहित इत्यर्थः, **'यस्मिन्प्रत्ययो न भवति स अनुक्तः'** अनभिहित इत्यर्थः। इति नियमाधारेण सम्प्रति कर्तरि प्रत्ययोऽत्र सञ्जातश्चदुक्ते कर्मणि प्रथमा चानुक्ते कर्मणि द्वितीया। अनुक्तत्त्वात् **'ग्राममिति'** द्वितीयान्तं पदं **'देवदत्तश्च'** प्रथमान्तपदम्। पूर्वोक्तस्य वाक्यस्य कर्मणि यग्विधायकत्त्वेन **'सार्वधातुके यगित्येतेन'** सूत्रेण 'यक्' इति भविष्यति इत्यत्र सति कर्मणि प्रत्यये तस्योक्तत्त्वाद् **'ग्राम'** इत्यत्र प्रथमा, अनभिहितत्त्वाद् **'कर्त्तृकरणयोस्तृतीया'** सूत्रेणामुना **'देवदत्तेन'** इत्यत्र तृतीया विहिता। **भावेऽपि यथा- 'देवदत्तो भवति'** इति कर्तरि भावेऽस्य 'देवदत्तेन **भूयते'**।

**'सार्वधातुके यक्'** - सूत्रार्थः- धातोर्यक् प्रत्ययः स्याद्भावकर्मवाचिनि सार्वधातुके परे। भावपदेन **'भावना, उत्पादना, क्रिया'** गृह्यन्ते।

**'लः कर्मणि'** .... इत्यस्मिन् सूत्रे भावकर्मकर्तृस्वरूपा लस्यार्थाः प्रोक्तास्तत्र धातुमात्रेभ्यः कर्तरि लकारमभिधाय इदानीमकर्मकेभ्यो भावे सकर्मकेभ्यः कर्मणि च लकारान् विधातुं प्रकरणारम्भ इति ज्ञेयम्।

**भावकर्मणोः - सूत्रार्थः** - भावे कर्मणि च यो लस्तस्यात्मनेपदं स्यात् यथा **'भूयते-', 'परिदृश्यते'** इति भावपदमधिकृत्य शङ्कोदेति यत् - अकर्मकेभ्यो धातुभ्यो यो लो विधीयते तत्र भावपदार्थः कः इति चेत् भावः क्रिया भावना व्यापारः सर्वेऽपि पर्यायवाचिनः समेषामत्र ग्रहणम्। इति सर्वं प्रोच्य-

**अथ द्विकर्मकेभ्यो धातुभ्यो नियमानाहुराचार्याः**<br>
**गौणे कर्मणि दुह्यादेः प्रधाने नीहृकृष्वहाम्॥**<br>
**बुद्धिभक्षार्थयोः शब्दकर्मकाणां निजेच्छया।**<br>
**प्रयोज्यकर्मण्यन्येषां ण्यन्तानां लादयो मताः॥**

द्विकर्मकेभ्यो धातुभ्यो व्यवस्थायनया निश्चेतुं शक्नुमो यत् द्वयोरपि कर्मणोः कतमस्मिन् कर्मणि लकारा ज्ञेया इति। तर्हि दुह्यादेरित्युक्तेः

कारकस्थ – '**दुह्याच्पच्दण्डरुधिप्रच्छिचिब्रूशासुजिमथमुषाम्**' द्वादशानामेतेषां धातुनां '**गौणे (अप्रधाने) कर्मणि**' लादयो मता: यथा '**गां पयो दोग्धि**' इत्येतस्य कर्मणि '**गौर्दुह्यते पय:**' इत्यत्र गौरित्यप्रधानकर्म पयश्च प्रधानकर्म तर्हि गोरप्रधानकर्मत्त्वात्तस्मिन् कर्मणि लकारो तथा तिङोक्तत्त्वाद्गौरिति प्रथमा। एवं 'पय:' इति प्रधानकर्मत्त्वात् तिङानुक्तत्त्वाच्च द्वितीया। इत्थमेव '**बलिं याचते वसुधामित्यस्य**' कर्मणि '**बलिर्याच्यते वसुधामिति**' उभयोरप्युदाहरणयो: गौणे कर्मणि लकारा: संवृत्ता:। अथ '**नीहृकृष्वहां**' धातूनां प्रधाने कर्मणि लकारा बोद्धव्या यथोदाहरणम् – '**देवदत्तो ग्राममजां नयति, हरति, कर्षति, वहति वा**' इति कर्त्तृस्थस्य वाक्यस्य कर्मणि प्रयोग: '**देवदत्तेन अजा ग्रामं नीयते, ह्रियते, कृष्यते, उह्यते वा**' भविष्यति अत्राप्यजायां प्रधाने कर्मणि लकारस्तेन प्रधानकर्मत्त्वात् तस्योक्तत्त्वाच्च '**अजामित्यत्र**' प्रथमैव तथा ग्रामस्याऽनुक्तत्वात् '**ग्राममित्यत्र**' द्वितीया।

'**अथ बुद्धयर्थकभक्षार्थकशब्दकर्मकाणाञ्च**' धातूनां सन्दर्भे व्यवस्थां विधायोच्यते यदेतेषां प्रधाने वा गौणे वा कर्मणि निजेच्छया लकारा: स्थापनीया:।

यथोदाहरणम् – '**बोध्यते माणवकं धर्म:**' यद्वा '**बोध्यते माणवका धर्ममिति**' अनयोरप्युदाहरणयोर्गौणे वा प्रधाने वा कर्मणि लादयो भवितुमर्हन्ति बुद्धयर्थकधा- तोरिदामुदाहरणम्।

**भक्षार्थकधातोर्यथा** – '**अश्यन्ते देवा अमृतं हरिणा**' उत '**अश्यतेऽमृतं देवानिति**' इत्युदाहर्त्तव्यम् अत्रापि स्वधिया स्वेच्छया लादयो मता:।

**शब्दकर्मकधातोर्यथा** – **वेदोऽध्याप्यते विधिं हरिणा**' यद्वा '**वेदमध्याप्यते विधिर्हरिणा**' इहापि द्वयोरपि कर्मणो: कतरस्मिन्नपि भवितुं शक्नुवन्ति लादय:।

**प्रयोज्यकर्मणि यथा** – अन्येषां गत्यर्थानां धातूनां तथा ''**हृक्रोरन्यतरस्यामिति**' सूत्रपठितानां धातूना '**प्रयोज्यकर्मणि**' लादयो बुद्धा: यथा – **देवदत्तो ग्रामं गम्यते**' (**केनापि**) इत्यत्र प्रयोज्यकर्मणि देवदत्ते प्रयोज्यकर्मत्त्वात् तिङोक्तत्त्वाच्च प्रथमा तथा ग्रामस्याऽनुक्तत्वात् '**ग्रामे**' द्वितीया **अत्र गमेर्ण्यन्ताल्लादयो ज्ञेया:**। अकर्मकण्यन्तधातूनां प्रयोज्यकर्मणि लादिव्यवस्थेयमपार्था प्रयोज्यं विहायान्यकर्माभावात् वारयितुमिमां शङ्कां **वा.** '**अकर्मकधातुभिर्योगेदेश: कालो भावो गन्तव्योऽध्वा च कर्मसंज्ञक इति वाच्यम्**' इत्युच्चारितम्। देशकालादिकर्मत्त्वेन '**अकर्मकाणां कालादिकर्मकाणां कर्मणि भावे च लकार इष्यते इति भाष्येष्टिमादाय** देशकालकर्मादिधातुभ्य: कर्मणि लादयस्स्युरेव तथा '**मासो मासं वा आस्यते देवदत्तेन**' वाक्यमिदं भवति।

**णिजन्तात्तु प्रयोज्ये प्रत्यय:** – '**मासमास्यते माणवक:**' अत्राकर्मकधातुरपि णिजन्तत्त्वात् सकर्मकतां प्राप्नोति तेन '**प्रयोज्यकर्मण्यन्येषां ण्यन्तानां लादयो मता:**' एतेन प्रयोज्यकर्मण्येव '**माणवके**' एव प्रत्यये सति तस्योक्तत्त्वात्प्रथमा।





# कन्यापञ्चरत्नकाव्यपाठः




**डॉ. शैलेन्द्रप्रसादउनियालः**
**सहायकाचार्यः ( सं. ), वेदविभागः**


कन्यां पालय मालयं नयत भोः कन्याधनं भारतम्,
कन्या दुःखदरिद्रता क्षयकरीकन्याधनं श्रीमतां।
विद्यादानगुणैर्युता हि सततं कन्याश्च वैद्याः शुभाः,
कन्या यानविमानचालनपरा दक्षाभियन्त्र्यस्तथा॥1॥

कन्या ध्यानसमाधियोगनिरता व्याख्यानदात्र्यस्सदा,
पितॄणां शुभमिच्छतीक्षतिहराः स्नेहप्रदात्र्योमताः।
कन्या भोगकरी यशः सुख करी कन्यापरं दैवतम्
कन्यां पालय मालयं नयत भोः कन्याधनं जीवनम्॥2॥

विज्ञाने गृहकार्यसेवनपरा विश्वस्य सम्पोषणम्,
कन्याभिः क्रियते सदा न तु नरैस्तस्माद्धि कन्यावरा।
कन्यापंचकमेव लौकिकजनैः धीरैः सदा गीयते,
कन्यां पालय मालयं नयत भोः कन्याधनं जीवनम्॥3॥

लक्ष्मीः शक्तिशिवाधराश्च जननी पीताम्बरा भैरवी
सर्वा चैव सदा तु विश्वमहिलाः कन्यापदे संस्थिताः
कन्या विश्वजनस्य पुष्टिसकलाः कन्याः कलास्फूर्तिदाः
कन्यां पालय मालयं नयत भोः कन्याधनं जीवनम्॥4॥

कन्यैकांशतयेह शोभिततनुः देव्याः सदा कथ्यते
कन्या कान्तिपुरस्सरं च सुखदा कन्या कनिष्ठावरा
कन्या पूजितयाभयादिजननी दानाच्चमोक्षप्रदा,
कन्यां पालय मालयं नयत भोः कन्याधनं जीवनम्॥5॥

